Sita's observation एव दोषो वर्धते while advising the Ceti to return the bark garment brought away by stealth although for fun, shows how good and pure minded she ■ Her unassuming simplicity in allowing even the servants of the palace to move with her with easy familiarity cannot but impress on our minds Her moving on terms ■f equal familiarity with the ascetic women who are utterly ignorant of wealth in the Janasthana and endearing herself so much to them that they call her 'Janaki', 'child', 'my dear' etc, according to their ages is quite characteristic of Sita Her womanly curiosity is revealed when she wishes to know how she will look in bark-garments She ■ very much pleased to hear from Avadatikā and the Ceti that she looks quite beautiful in any dress Her apprehending danger from the pseudo ascetic Ravaṇa when Rāma goes after the golden deer and her getting frightened at Rāma's reference to the golden deer even after the destruction of Ravaṇa show her feminine weakness which is characteristic of the majority of Hindu women

Sitā is very kind hearted and ever ready to do her best for making others happy Thus she pleads with Rāma in her own winning way, to allow Laksmaṇa to follow them to the forests and to grant Bharata his first request (अतिक्रमण म श्वपे भरत । ननु दीयते प्रथमयाचन भरतस्य !) She has a very warm affection for Bharata and Lakṣmaṇa She is eager to retain Bharata in the forest with them for sometime at least and feels disappointed when he ■ asked by Rāma to return to Ayodhya the very day he had come there Her great respect and love for Das'aratha makes her eagerly ask 'अपि तात कुशली ?' the moment she is informed that Rāma is going to be consecrated Her not saying a word about Kaikeyī although so much was being argued for and against Kaikeyī s greed in her own presence by the Kāñcukīya, and her words

'Many things happen in courts' show how she is always *conscious of her own limitations*

Thus the character of Sita is highly noble and flawless Her simplicity is graceful The sweetness of her disposition is charming Her affection for Bharata and Laksmaṇa is *warm with motherly feelings Her reverential love for Das'aratha* is sincere Her devotion to her husband with whom she always identifies herself is admirable. The easy familiarity with which she moves with persons devoid of wealth *or high social status is impressive In one word, every one* of the qualities of the virtuous and noble minded Sita is highly praiseworthy and deserves to be an ideal for every woman

KAUSALYĀ — Kausalya appears on the stage only twice, once while attending on the grief stricken Das'aratha and a second time in the Statue-house scene She is a faithful wife of Das'aratha, loving him dearly to the last Her love for her son Rama is equally warm She is as deeply grieved as Das'aratha when Rama is exiled She would have probably thought of going to the forest with Rama, but her *duty towards her own husband detained her at home* When Das'aratha, who has lost the power of his eye sight, his end having come near, asks her who she is, her reply to him is, 'I, the mother of an unloved son' Her grief is so much that she altogether forgets that her words may make her beloved husband miserable With the help of Sumitra, Laksmaṇa's mother, she personally attends on Das'aratha fondly and in all earnestness Her comforting words to Das'aratha, although she herself is weeping while uttering them, that Sita and the two princes are going to be seen soon after the term of exile is over, show her eagerness in seeing that Das'aratha's life is saved somehow or other It is very significant that she says not a single word, good or bad, about Kaikeyi In the Statue house scene, her words pronounced as a

blessing on Bharata—'My son, be without any anguish' are full of sincerity. She has known the mentality of Bharata and has correctly guessed that he must be very much worried mentally at his mother's conduct. But Bharata appears to take them amiss as he feels that he has been chided by her thereby. But Kausalya's good feeling towards him is clearly seen when she advises him a little later to bow down to his mother at least for the sake of etiquette. She is rightly compared by Bharata to the great and holy river Ganges.

SUMITRĀ—Sumitrā, mother of Lakṣmaṇa, is the second wife of Das'aratha. She is noble-minded and never shows out her feelings. Her characterising Sītā as बालापि अबालचारित्रा and asking Sumantra particularly about Sītā's message to them, shows how deep she loves Sītā. She loves her husband with all her heart and joins Kausalya in attending on him personally. The blessing she confers on Bharata in the Statue-house scene 'यशोभागी भव' looks as though she is just suggesting to him the future course of action he should adopt. Bharata catches her point and answers 'इदं तावत्प्रयतिष्ये'। Although she is given only a back seat in the two scenes she appears, she shows herself a dutiful and loving wife of Das'aratha, with plenty of the fond and deep love of a mother towards the princes and Sītā.

॥ श्रीः ॥

भासकवि-विरचितं

# ॥ प्रतिमा-नाटकम् ॥



[1] (नान्द्यन्ते ततः प्रविशति सूत्रधारः)

[2] सूत्रधारः—सीताभवः पातु सुमन्त्रतुष्टः

सुग्रीवरामः सहलक्ष्मणश्च ।

यो रावणार्यप्रतिमश्च देव्या

विभीषणात्मा भरतोऽनुसर्गम् ॥ १ ॥

[3] (नेपथ्याभिमुखमवलोक्य) आर्ये, इतस्तावत् ।

[4] (प्रविश्य) नटी—आर्य, इयमस्मि । [अय्य, इअह्मि ।]

[5] सूत्रधारः—आर्ये, इममेवेदानीं शरत्कालमधिकृत्य गीयतां तावत् ।

[6] नटी—आर्य, तथा । [अय्य, तह ।] (गायति)

[7] सूत्रधारः—अस्मिन् हि काले,

[8] चरति पुलिनेषु हंसी काशांशुकवासिनी सुसंहृष्टा ।

[9] (नेपथ्ये) आर्य ! आर्य ! [अय्य ! अय्य !]

[10] (आकर्ण्य) सूत्रधारः—भवतु, विज्ञातम् ।

[11] मुदिता नरेन्द्रभवने त्वरिता प्रतिहाररक्षीव ॥ २ ॥

(निष्क्रान्तौ)

[12] स्थापना

[13] (प्रविश्य) प्रतिहारी—आर्य, क इह काञ्चुकीयानां संनिहितः ?
[अय्य, को इह कञ्चुईआण सण्णिहिदो ?]

[14] (प्रविश्य) काञ्चुकीयः—भवति, अयमस्मि। किं क्रियताम् ?

[15] प्रतिहारी—आर्य, महाराजो देवासुरसंग्रामेष्वप्रतिहतमहारथो दशरथ आज्ञापयति—'शीघ्रं भर्तृदारकस्य रामस्य राज्यप्रभावसंयोगकारका अभिषेकसंभारा आनीयन्ताम्' इति। [अय्य, महाराओ देवासुरसंगामेसु अप्पडिहदमहारहो दसरहो आणवेदि—'सिग्घं भट्टिदारअस्स रामस्स रज्जप्पहावसंजोअकारआ अहिसेअसम्भारा आणीअन्तु' त्ति।]

[16] काञ्चुकीयः—भवति, यदाज्ञप्तं महाराजेन तत्सर्वं सङ्कल्पितम्। पश्य—

[17] छत्रं सव्यजनं सनन्दिपटहं भद्रासनं कल्पितं
न्यस्ता हेममयाः सदर्भकुसुमास्तीर्थाम्बुपूर्णा घटाः।
युक्तः पुष्यरथश्च मन्त्रिसहिताः पौराः समभ्यागताः
सर्वस्यास्य हि मङ्गलं स भगवान् वेद्यां वसिष्ठः स्थितः ॥३॥

[18] प्रतिहारी—यद्येवं, शोभनं कृतम्। [जइ एव्वं, सोहणं किदं]

[19] काञ्चुकीयः—हन्त भोः !

[20] इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः।
रामाभिधानं मेदिन्यां शशाङ्कमभिषिञ्चता ॥ ४ ॥

[21] प्रतिहारी—त्वरतां त्वरतामिदानीमार्यः। [तुवरदु तुवरदु दाणिं अय्यो]

[22] काञ्चुकीयः—भवति, इदं त्वर्यते। (निष्क्रान्तः)

[23] प्रतिहारी—(परिक्रम्यावलोक्य) आर्य संभवक ! संभवक ! गच्छ। त्वमपि महाराजवचनेनार्यपुरोहितं यथोपचारेण त्वरय। (अन्यतो गत्वा) सारसिके, सारसिके ! सङ्गीतशालां गत्वा नाटकीयानां विज्ञापय—

'कालसंवादिना नाटकेन सज्जा भवत' इति । यावदहमपि सर्वं कृतमिति महाराजाय निवेदयामि । [अय्य संभअ, संभअ! गच्छ । तुमं पि महाराअवअणेण अय्यपुरोहिदं जहोपआरेण तुवारेहि । सारसिए, णारदिए! सङ्गीद-साल गच्छिअ णाडइआण णिवेदेहि—'कालसंवादिणा णाडएण सज्जा होह' त्ति । जाव अहं पि सव्वं किदं त्ति महाराअस्स णिवेदेमि । ] (निष्क्रान्ता)

24 (ततः प्रविशति अवदातिका वल्कलं गृहीत्वा)

25 अवदातिका—अहो अत्याहितम्! परिहासेनार्याया वल्कलमुपनयन्त्या ममैतावद्भयमासीत्, किं पुनर्लोभेन परधनं हरतः? हसितुमिवेच्छामि । न खलु एकाकिन्या हसितव्यम् । [अहो अच्चाहिदं! परिहासेण वि इमं वक्कलं उवणअन्तीए मम एत्तिअं भअं आसी, किं पुण लोभेण परधणं हरन्तस्स । हसिदुं विअ इच्छामि । ण खु एआइणीए हसिदव्वं ]

26 (ततः प्रविशति सीता सपरिवारा)

27 सीता—हञ्जे, अवदातिका परिशङ्कितवर्णेव दृश्यते । किन्नु खलु इवैतत्? [हञ्जे, ओदादिआ परिसङ्किदवण्णा विअ दिस्सइ । किण्णु हु णिअ एदं]

28 चेटी—भट्टिनि, सुलभापराधः परिजनो नाम । अपराद्धा भविष्यति ।
[भट्टिणि, सुलहावराहो परिअणो णाम । अवरद्धा भविस्सदि ?]

29 सीता—नहि नहि; हसितुमिवेच्छति ।
[णहि णहि, हसिदुं विअ इच्छदि ।]

30 अवदातिका—(उपसृत्य) जयतु भट्टिनी! भट्टिनि, न खलु अहमपराद्धा । [जेदु भट्टिणी! भट्टिणि, ण हु अहं अवरद्धा ।]

31 सीता—का त्वां पृच्छति? अवदातिके, किमेतद् वामहस्तपरिगृहीतम्? [का तुमं पुच्छदि? ओदादिए, किं एदं वामहत्थपरिग्गहिदं?]

32 अवदातिका—भट्टिनि, इदं वल्कलम् । [भट्टिणि, इदं वक्कलं ।]

33 सीता—वल्कलं कस्मादानीतम्? [वक्कलं किस्स आणीदं?]

46 चेटी—नास्ति वाचा प्रयोजनम् । इमानि प्रहर्षितानि तनूरुहाणि मन्त्रयन्ते । [णत्थि वाआए पओअणं । इमे पहरिसिदा तणूरुहा मन्तेन्ति । ]

(पुलकं दर्शयति)

47 सीता—हञ्जे, आदर्शं तावदानय । [हञ्जे, आदंसअं दाव आणेहि]

48 चेटी—यद्भट्टिन्याज्ञापयति । (निष्क्रम्य, प्रविश्य) भट्टिनि, अयमादर्शः । [जं भट्टिणी आणवेदि । भट्टिणि, अअं आदंसओ । ]

49 सीता—(चेटीमुखं विलोक्य) तिष्ठतु तावदादर्शः । त्वं किमपि वक्तुकामेव ? [चिट्ठदु दाव आदंसओ । तुवं किं वि वत्तुकामा विअ ? ]

50 चेटी—भट्टिनि, एवं मया श्रुतम् । आर्यबालाकिः कञ्चुकी भणति—'अभिषेकोऽभिषेक' इति । [भट्टिणि, एव्वं मए सुदं । अय्यबालाई भणादि—'अहिसेओ अहिसेओ' त्ति । ]

51 सीता—कोऽपि भर्ता राज्ये भविष्यति ।
[को वि भट्टा रज्जे भविस्सदि । ]

52 (प्रविश्यापरा) चेटी—भट्टिनि, प्रियाख्यानिकं, प्रियाख्यानिकम् !
[भट्टिणि, पिअक्खाणिअं, पिअक्खाणिअं !

53 सीता—किं किं प्रतीप्य मन्त्रयसे ? [किं किं पडिच्छिअ मन्तेसि ? ]

54 चेटी—भर्तृदारकः किलाभिषिच्यते !
[भट्टिदारओ किल अहिसिञ्चीअदि ! ]

55 सीता—अपि तातः कुशली ? [अवि तादो कुसली ? ]

56 चेटी—महाराजेनैवाभिषिच्यते । [महाराएण एव्व अहिसिञ्चीअदि]

57 सीता—यद्येवं, द्वितीयं मे प्रियं श्रुतम् । विशालतरमुत्सङ्गं कुरु । [जइ एव्वं, दुदीअं मे पिअं सुदं । विसालदरं उच्छङ्गं करेहि । ]

58 चेटी—भट्टिनि, तथा । [भट्टिणि, तह । ]

59 (चेटी तथा करोति । सीता आभरणान्यवमुच्य ददाति । )

³⁴ अवदातिका—शृणोतु भट्टिनी । नेपथ्यपालिन्यार्यरेवा निर्वृत्त रङ्गप्रयोजनमशोकवृक्षस्यैकं किसलयमस्मामिर्याचितासीत् । न च तया दत्तम् । ततोऽर्हत्यपराध इतीदं गृहीतम् । [सुणादु भट्टिणी । णेवच्छपालिणी अय्यरेवा णिवुत्तरङ्गप्पओअण असोअरुक्खस्स एक्कं किसलअं अह्मेहि जाइदा आसि । ण अ ताए दिण्णं । तदो अरिहदि अवराहो त्ति इदं गहिदं । ]

³⁵ सीता—पापकं कृतम् । गच्छ निर्यातय ।
[पावअं किदं । गच्छ णिय्यादेहि । ]

³⁶ अवदातिका—भट्टिनि, परिहासनिमित्तं खलु मयैतदानीतम् ।
[भट्टिणि, परिहासणिमित्तं खु मए एदं आणीदं । ]

³⁷ सीता—उन्मत्तिके, एवं दोषो वर्धते । गच्छ, निर्यातय निर्यातय ।
[उम्मत्तिए, एवं दोसो वड्ढइ । गच्छ, णिय्यादेहि णिय्यादेहि । ]

³⁸ अवदातिका—यद्भट्टिन्याज्ञापयति । [जं भट्टिणी आणवेदि । ]
(प्रस्थातुमिच्छति)

³⁹ सीता—हला, एहि तावत् । [हला, एहि दाव । ]

⁴⁰ अवदातिका—भट्टिनि, इयमस्मि । [भट्टिणि, इअह्मि । ]

⁴¹ सीता—हला, किन्नु खलु ममापि तावत् शोभते ?
[हला, किंणु खु मम वि दाव सोहदि ? ]

⁴² अवदातिका—भट्टिनि, सर्वशोभनीयं सुरूपं नाम । अलङ्करोतु भट्टिनी । [भट्टिणि, सव्वसोहणीअं सुरूवं णाम । अलङ्करोदु भट्टिणी । ]

⁴³ सीता—आनय तावत् । (गृहीत्वालंकृत्य) हला, पश्य; किमिदानीं शोभते ? [आणेहि दाव । हला, पेक्ख, किं दाणिं सोहदि ? ]

⁴⁴ अवदातिका—तव खलु शोभते नाम । सौवर्णिकमिव वल्कलं संवृत्तम् । [तव खु सोहदि णाम । सोवण्णिअं विअ वक्कलं संवुत्तम् । ]

⁴⁵ सीता—हञ्जे, त्वं किञ्चिन्न भणसि ? [हञ्जे, तुवं किंचि ण भणसि ]

[46] चेटी—नास्ति वाचा प्रयोजनम् । इमानि प्रहर्षितानि तनूरुहाणि मन्त्रयन्ते । [णत्थि वाआए पओअणं । इमे पहरिसिदा तणूरुहा मन्तेन्ति । ]

(पुलकं दर्शयति)

[47] सीता—हञ्जे, आदर्शं तावदानय । [हञ्जे, आदंसअं दाव आणेहि]

[48] चेटी—यद्भट्टिन्याज्ञापयति । (निष्क्रम्य, प्रविश्य) भट्टिनि, अयमादर्शः । [जं भट्टिणी आणवेदि । भट्टिणि, अअं आदंसओ । ]

[49] सीता—(चेटीमुखं विलोक्य) तिष्ठतु तावदादर्शः । त्वं किमपि वक्तुकामेव ? [चिट्ठदु दाव आदंसओ । तुवं किं वि वत्तुकामा विअ ? ]

[50] चेटी—भट्टिनि, एवं मया श्रुतम् । आर्यबालाकिः कञ्चुकी भणति—'अभिषेकोऽभिषेक' इति । [भट्टिणि, एव्वं मए सुदं । अय्यबालाई भणादि—'अहिसेओ अहिसेओ' त्ति । ]

[51] सीता—कोऽपि भर्ता राज्ये भविष्यति ।
[को वि भट्टा रज्जे भविस्सदि । ]

[52] (प्रविश्यापरा) चेटी—भट्टिनि, प्रियाख्यानिकं, प्रियाख्यानिकम् !
[भट्टिणि, पिअक्खाणिअं, पिअक्खाणिअं !

[53] सीता—किं किं प्रतीप्य मन्त्रयसे ? [किं किं पडिच्छिअ मन्तेसि ? ]

[54] चेटी—भर्तृदारकः किलाभिषिच्यते !
[भट्टिदारओ किल अहिसिञ्चीअदि ! ]

[55] सीता—अपि तातः कुशली ? [अवि तादो कुसली ? ]

[56] चेटी—महाराजेनैवाभिषिच्यते । [महाराएण एव्वं अहिसिञ्चीअदि]

[57] सीता—यद्येवं, द्वितीयं मे प्रियं श्रुतम् । विशालतरमुत्सङ्गं कुरु । [जइ एव्वं, दुदीअं मे पिअं सुदं । विसालदरं उच्छङ्गं करेहि । ]

[58] चेटी—भट्टिनि, तथा । [भट्टिणि, तह । ]

[59] (चेटी तथा करोति । सीता आभरणान्यवमुच्य ददाति । )

[60] चेटी—भट्टिनि, पटहशब्द इव। [भट्टिणि, पडहसद्दो विअ]

[61] सीता—स एव। [सो एव्व]

[62] चेटी—एकपदे अवघट्टिततूष्णीक पटहशब्द संवृत्त।
[एक्कपदे ओघट्टिअतुह्णीओ पडहसद्दो सवुत्तो।]

[63] सीता—को नु खल्वुद्घातोऽभिषेकस्य! अथवा बहुवृत्तान्तानि राजकुलानि नाम।
[क णु खु उग्घादो अहिसेअस्स! अहवा बहुवुत्तन्ताणि राअउलाणि णाम।]

[64] चेटी—भट्टिनि, एव मया श्रुत,—'भर्तृदारकमभिषिच्य महाराजो वन गमिष्यति' इति। [भट्टिणि, एव्व मए सुद—'भट्टिदारअ अहिसिञ्चिअ महाराओ वण गमिस्सदि' त्ति।]

[65] सीता—यद्येवं, न तदभिषेकोदकं, मुखोदकं नाम।
[इ एव्व, ण सो अहिसेओदओ, मुहोदअ णाम।]

[66] (तत प्रविशति राम)

[67] रामः—हन्त भो!

[68] आरब्धे पटहे स्थिते गुरुजने भद्रासने लङ्घिते
स्कन्धोच्चारणनम्यमानवदनप्रच्योतितोये घटे।
राज्ञाहूय विसर्जिते मयि जनो धैर्येण मे विस्मितः
स्वः पुत्रः कुरुते पितुर्यदि वचः कस्तत्र भो विस्मय.॥

[69] विस्मयमिदानीं पुत्रेति स्वयं राज्ञा निर्वर्तितस्यापनीतभारोऽर्पितमिव मे मन। किंपुनः मगच्छामि राम, महाराज एव महाराज यावदिदानीं मैथिलीं पश्यामि।

[70] अवदातिका—भट्टिनि, भर्तृदारक मन्वागच्छति! नासीनं वल्कलम्। [भट्टिणि भट्टिदारअ खु आअच्छइ। णासीण वक्कल।]

[71] रामः—मैथिलि, किमास्यते ?

[72] सीता—हं आर्यपुत्रः ! (उत्थाय) जयत्वार्यपुत्रः ।
[हं अय्यउत्त ! (उत्थाय) जेदु अय्यउत्तो ।]

[73] रामः—मैथिलि, आस्यताम् । (उपविशति)

[74] सीता—यदार्यपुत्र आज्ञापयति ।
[जं अय्यउत्तो आणवेदि ।] (उपविशति)

[75] अवदातिका—भट्टिनि, स एव भर्तृदारकस्य वेषः । अलीकमिवैतद्भवेत् । [भट्टिणि सो एव्व भट्टिदारअस्स वेसो । अलिअं विअ एदं]

[76] सीता—तादृशो जनोऽलीकं न मन्त्रयते । अथवा बहुवृत्तान्तानि राजकुलानि नाम ।
[तादिसो जणो अलिअं ण मन्तेदि । अहवा बहुवुत्तन्ताणि राअउलाणि णाम ।]

दिग्ध गिरससि अ महाराअस्स पादमूलेसु पडिअं त्ति । ]

[83] रामः—सुष्ठु तर्कितम् । (अल्पं तुल्यशीलानि द्वन्द्वानि सृज्यन्ते) तत्र हि पादयोरसि पतित ।

[84] समं बाष्पेण पतता तस्योपरि ममाप्यधः ।
पितुर्मे क्लेदितौ पादौ ममापि क्लेदितं शिरः ॥६॥

[85] सीता—ततस्ततः ? [तदो तदो ?]

[86] रामः—ततोऽप्रतिगृह्यमाणेष्वनुनयेषु आसन्नजरादोषैः स्वैः प्राणैरस्मि शापितः ?

[87] सीता—ततस्ततः ? [तदो तदो ?]

[88] रामः—ततस्तदानीं,

[89] शत्रुघ्नलक्ष्मणगृहीतघटेऽभिषेके
छत्रे स्वयं नृपतिना रुदता गृहीते ।
संभ्रान्तया किमपि मन्थरया च कर्णे
राज्ञः शनैरभिहितं च न चास्मि राजा ॥७॥

[90] सीता—प्रियं मे ? महाराज एव महाराजः । आर्यपुत्र एव आर्यपुत्रः । [पिअं मे ? महाराओ एव्व महाराओ । अय्यउत्तो एव्व अय्यउत्तो]

[91] रामः—मैथिलि, किमर्थं विमुक्तालंकारासि ?

[92] सीता—न खलु तावदाबध्नामि । [ण खु दाव आबज्झामि ।]

[93] रामः—न खलु । प्रत्यग्रावतारितैर्भूषणैर्भवितव्यम् । तथा हि-

[94] कर्णौ त्वरापहृतभूषणभुग्नपाशौ
संस्रंसिताभरणगौरतलौ च हस्तौ ।
एतानि चाभरणभारनतानि गात्रे
स्थानानि नैव समतामुपयान्ति तावत् ॥८॥

[95] सीता—पारयत्यार्यपुत्रोऽलीकमपि सत्यमिव मन्त्रयितुम् ।
[पारेदि अय्यउत्तो अलिअ पि सच्चं विअ मन्तेदु ।]

[96] रामः—तेन हि अलंक्रियताम् । अहमादर्शं धारयिष्ये ।
(तथा कृत्वा निर्वर्ण्य)

[97] आदर्शे वल्कलानीव किमेते सूर्यरश्मयः ।
हसितेन परिज्ञातं क्रीडेयं नियमस्पृहा ॥९॥

[98] अवदातिके, किमेतत् ?

[99] अवदातिका—भर्तः, किन्नु खलु शोभते न शोभते इति कौतूहलेनाबद्धानि। [भट्ट, किण्णु हु सोहदि ण सोहदि त्ति कोदूहल्लेण आबद्धा]

[100] रामः—मैथिलि, किमिदम् ? इक्ष्वाकूणां वृद्धालङ्कारस्त्वया धार्यते । अस्त्यस्माकं प्रीतिः । आनय ।

[101] सीता—मा खलु मा खल्वार्यपुत्रोऽमङ्गलं भणतु ।
[मा खु मा खु अय्यउत्तो अमङ्गळं भणादु।]

[102] रामः—मैथिलि, किमर्थं वारयसि ?

[103] सीता—उज्झिताभिषेकस्यार्यपुत्रस्यामङ्गलमिव मे प्रतिभाति ।
[उज्झिदाहिसेअस्स अय्यउत्तस्स,अमङ्गळं विअ मे पडिहादि ।]

[104] रामः—मा स्वयं मन्युमुत्पाद्य परिहासे विशेषतः ।
शरीरार्धेन मे पूर्वमाबद्धा हि यदा त्वया ॥१०॥

[105] (नेपथ्ये) हा, हा महाराजः ।

[106] सीता—आर्यपुत्र, किमेतत् ? [अय्यउत्त, किं एदं ?]

[107] रामः—(आकर्ण्य)
नारीणां पुरुषाणां च निर्मर्यादो यदा ध्वनिः ।
सुव्यक्तं प्रभवामीति मूले दैवेन ताडितम् ॥११॥

108 तूर्णं ज्ञायतां शब्दः ।

109 (प्रविश्य) काञ्चुकीयः—परित्रायतां, परित्रायतां कुमारः ।

110 रामः—आर्य, कः परित्रातव्यः ?

111 काञ्चुकीयः—महाराजः ।

112 रामः—महाराज इति ? आर्य, ननु वक्तव्यमेकशरीरसंक्षिप्ता पृथिवी रक्षितव्येति ? अथ कुत उत्पन्नोऽयं दोषः ?

113 काञ्चुकीयः—स्वजनात् ।

114 रामः—स्वजनादिति ? हन्त नास्ति प्रतीकारः ।

115 शरीरेऽरिः प्रहरति हृदये स्वजनस्तथा ।
कस्य स्वजनशब्दो मे लज्जामुत्पादयिष्यति ॥१२॥

116 काञ्चुकीयः—तत्र भवत्याः कैकेय्याः ।

117 रामः—किमम्बायाः ? तेन हि उदर्केण गुणेनात्र भवितव्यम् ।

118 काञ्चुकीयः—कथमिव ?

119 रामः—श्रूयताम् ।

120 यस्याः शक्रसमो भर्ता मया पुत्रवती च या ।
फले कस्मिन् स्पृहा तस्या येनाकार्यं करिष्यति ॥१३॥

121 काञ्चुकीयः—कुमार, अलमुपहतासु स्त्रीबुद्धिषु स्वमार्जवमुपनिक्षेप्तुम् । तस्या एव खलु वचनाद्भवदभिषेको निवृत्तः ।

122 रामः—आर्य, गुणाः खल्वत्र ।

123 काञ्चुकीयः—कथमिव ?

124 रामः—श्रूयताम् ।

125 वनगमननिवृत्तिः पार्थिवस्यैव तावत्
मम पितृपरवत्ता बालभावस्स एव ।

नवनृपतिविमर्शे नास्ति शङ्का प्रजानाम्
अथ च न परिभोगैर्वञ्चिता भ्रातरो मे ॥१४॥

126 काञ्चुकीयः—अथ च तयानाहूतोपसृतया भरतोऽभिषिच्यतां राज्य इत्युक्तम् । अत्राप्यलोभः ?

127 रामः—आर्य, भवान् खल्वसत्पक्षपातादेव नार्थमवेक्षते । कुतः,

128 शुल्के विपणितं राज्यं पुत्रार्थे यदि याच्यते ।
तस्या लोभोऽत्र नास्माकं भ्रातृराज्यापहारिणाम् ॥१५॥

129 काञ्चुकीयः—अथ—

131 रामः—अतः परं न मातुः परिवादं श्रोतुमिच्छामि । महाराजस्य वृत्तान्तस्तावदभिधीयताम् ।

132 काञ्चुकीयः—ततस्तदानीं,

133 शोकादवचनाद् राज्ञा हस्तेनैव विसर्जितः ।
किमप्यभिमतं मन्ये मोहं च नृपतिर्गतः ॥१६॥

133 रामः—कथं मोहमुपगतः ?

134 (नेपथ्ये) कथं कथं मोहमुपगत इति ?

135 यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दया

136 रामः—(आकर्ण्य पुरतो विलोक्य)
अक्षोभ्यः क्षोभितः केन लक्ष्मणो धैर्यसागरः ।
येन रुष्टेन पश्यामि शताकीर्णमिवाग्रतः ॥१७॥

137 (ततः प्रविशति धनुर्बाणपाणिर्लक्ष्मणः)

138 लक्ष्मणः—(सक्रोधम्) कथं, कथं मोहमुपगत इति ?

139 यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दया
स्वजननिभृतः सर्वोऽप्येवं मृदुः परिभूयते ।

अथ न रुचितं मुञ्च त्वं मामहं कृतनिश्चयो
युवतिरहितं लोकं कर्तुं यतश्छलिता वयम् ॥१८॥

111 सीता—आर्यपुत्र, रोदितव्ये काले सौमित्रिणा धनुर्गृहीतम् ! अपूर्वः खल्वस्यायासः !
[अय्यउत्त, रोदिदव्वे काळे सोमित्तिणा धणू गहीदं ! अपुव्वो खु से आआसो]

112 रामः—सुमित्रामातः, किमिदम् ?

113 लक्ष्मणः—कथं, कथं, किमिदं नाम !

113 क्रमप्राप्ते हृते राज्ये भुवि शोच्यासने नृपे ।
इदानीमपि संदेहः किं क्षमा निर्मनस्विता ॥१९॥

114 रामः—सुमित्रामातः, अस्मद्राज्यभ्रंशो भवत उद्योगं जनयति ! आः ! अपण्डितः खलु भवान् !

115 भरतो वा भवेद्राजा वयं वा ननु तत् समम् ।
यदि तेऽस्ति धनुःश्लाघा स राजा परिपाल्यताम् ॥

116 लक्ष्मणः—न शक्नोमि रोषं धारयितुम् । भवतु, भवतु ! गच्छामस्तावत् । (प्रस्थितः)

117 रामः—

त्रैलोक्यं दग्धुकामेव ललाटपुटसंस्थिता ।
भ्रुकुटिर्लक्ष्मणस्यैषा नियतीव व्यवस्थिता ॥२१॥

118 सुमित्रामातः, इतस्तावत् ।

119 लक्ष्मणः—आर्य, अयमस्मि ।

120 रामः—भवतः स्थैर्यमुत्पादयता मयैवमभिहितम् । उच्यताम् इदानीम् ।

151 ताते धनुर्नमयि* सत्यमवेक्षमाणे ?
 मुञ्चानि मातरि शरं स्वधनं हरन्त्याम् ?
दोषेषु बाह्यमनुजं भरतं हनानि-?
 किं रोषणाय रुचिरं त्रिषु पातकेषु ॥२२॥

152 लक्ष्मणः--(सबाष्पम्) हा धिक्! अस्मान् अविज्ञायोपालभसे!

153 यत्कृते महति क्लेशे राज्ये मे न मनोरथः ।
 वर्षाणि किल वस्तव्यं चतुर्दश वने त्वया ॥२३॥

154 रामः—अत्र मोहमुपगतस्तत्रभवान्! हन्त! निवेदितमप्रभुत्वम् । मैथिलि,

155 मङ्गलार्थेऽनया दत्तान् वल्कलांस्तावदानय ।
 करोम्यन्यैर्नृपैर्धर्मं नैवाप्तं नोपपादितम् ॥२४॥

156 सीता—गृह्णात्वार्यपुत्रः । [गह्णदु अय्यउत्तो।]

157 रामः—मैथिलि, किं व्यवसितम् ?

158 सीता—ननु सहधर्मचारिणी खल्वहम् ?
[णं सहधम्मआरिणी क्खु अहं ?]

159 रामः—मयैकाकिना किल गन्तव्यम् ?

160 सीता—अतो नु खल्वनुगच्छामि। [अदो णु खु अणुगच्छामि।]

161 रामः—वने खलु वस्तव्यम् ?

162 सीता—तत् खलु मे प्रासादः । [तं खु मे पासादो।]

163 रामः—श्वश्रूश्वशुरशुश्रूषापि च ते निर्वर्तयितव्या ?

164 सीता—एतामुद्दिश्य देवतानां प्रणामः क्रियते।

---

* न मयि, नमतु

[णं उद्दिसिअ देवदाणं पणामो करीअदि।]

165 रामः—लक्ष्मण, वार्यतामियम्।

166 लक्ष्मणः—आर्य, नोत्सहे श्लाघनीये काले वारयितुमत्रभवतीम्। कुतः,

167 अनुचरति शशाङ्कं राहुदोषेऽपि तारा
पतति च वनवृक्षे याति भूमिं लता च।
त्यजति न च करेणुः पङ्कलग्नं गजेन्द्रं
व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः॥२५॥

168 (प्रविश्य) चेटी—जयतु भट्टिनी। नेपथ्यपालिन्यार्यरेवा प्रणम्य विज्ञापयति—'अवहासिकया सङ्गीतशालाया आच्छिद्य वल्कला आनीताः। इमेऽपरा अननुभूता वल्कलाः। निर्वर्त्यतां तावत् किल प्रयोजनम्' इति। [जेदु भट्टिणी। णेवच्छपालिणी अय्यरेवा पणमिअ विण्णवेदि—'ओहासिआए सङ्गीदसालादो आच्छिन्दिअ वक्कला आणीदा। इमा अवरा अणणुहूदा वक्कला। णिव्वत्तीअदु दाव किल पओअणं' त्ति।]

169 रामः—भद्रे, आनय; सन्तुष्टैषा। वयमर्थिनः।

170 चेटी—गृह्णातु भर्ता। [गह्णदु भट्टा।] (तथा कृत्वा निष्क्रान्ता)

(रामो गृहीत्वा परिधत्ते)

171 लक्ष्मणः—प्रसीदत्वार्यः।

172 निर्योगाद् भूषणान्माल्यात् सर्वेभ्योऽर्धं प्रदाय मे।
चीरमेकाकिना बद्धं चीरे सत्यपि मत्सरी॥२६॥

173 रामः—मैथिलि, वार्यतामयम्।

174 सीता—सौमित्रे, निवर्त्यतां किल! [सोमित्ते, णिवत्तीअदु किल।]

175 लक्ष्मणः—आर्ये,

[176] गुरोर्मे पादशुश्रूषां त्वमेका कर्तुमिच्छसि ।
तवैव दक्षिणः पादो मम सव्यो भविष्यति ॥२७॥

[177] सीता—दयितां खल्वार्यपुत्र । सन्तप्यते सौमित्रिः ।
[दीअदु खु अय्यउत्तो । सन्तप्पदि सोमित्ती ।]

[178] रामः—सौमित्रे, श्रूयताम् । वल्कलानि नाम

[179] तपःसङ्ग्रामकवचं नियमद्विरदाङ्कुशः ।
खलीनमिन्द्रियाश्वानां गृह्यतां धर्मसारथिः ॥२८॥

[180] लक्ष्मणः—अनुगृहीतोऽस्मि । (गृहीत्वा परिवर्त्ते)

[181] रामः—श्रुतवृत्तान्तैः पौरैः सन्निरुद्धो राजमार्गः । उत्सार्यतामुत्सार्यतां तावत् ।

[182] लक्ष्मणः—आर्य, अहमग्रतो यास्यामि । उत्सार्यताम्, उत्सार्यताम् ।

[183] रामः—मैथिलि, अपनीयतामवगुण्ठनम् ।

[184] सीता—यदार्यपुत्र आज्ञापयति ।
[ज अय्यउत्तो आणवेदि ।] (अपनयति)

[185] रामः—भो भोः पौराः ! शृण्वन्तु शृण्वन्तु भवन्तः !

[186] स्वैरं हि पश्यन्तु कलत्रमेतद् बाष्पाकुलाक्षैर्वदनैर्भवन्तः ।
निर्दोषदृश्या हि भवन्ति नार्यो यज्ञे विवाहे व्यसने वने च ॥

[187] (प्रविश्य) काञ्चुकीयः—कुमार, न खलु, न खलु गन्तव्यम् । एष हि महाराजः,

श्रुत्वा ते वनगमनं वधूसहायं
सौभ्रात्रव्यवसितलक्ष्मणानुयात्रम् ।

उत्थाय क्षितितलरेणुरूषिताङ्गः
कान्तारद्विरद इवोपयाति जीर्णः ॥३०॥

[189] लक्ष्मणः—आर्य,
चीरमालोत्तरीयाणां किं दृश्यं वनवासिनाम्।

[190] रामः—गतेष्वस्मासु राजा नः शिरःस्थानानि पश्यतु ॥

(इति निष्क्रान्ताः सर्वे)

इति प्रथमोऽङ्कः

॥ अथ द्वितीयोऽङ्कः ॥

(ततः प्रविशति काञ्चुकीयः)

[1] काञ्चुकीयः—भो भोः प्रतिहारव्यापृताः! स्वेषु स्वेषु स्थानेष्वप्रमत्ता भवन्तु भवन्तः।

[2] (प्रविश्य) प्रतिहारी—आर्य, किमेतत्? [अय्य, किं एदं?]

[3] काञ्चुकीयः—एष हि महाराजः सत्यवचनरक्षणपरं राममरण्यं गच्छन्तमुपावर्तयितुमशक्तः पुत्रविरहशोकाग्निना दग्धहृदय उन्मत्त इव बहु प्रलपन् समुद्रगृहके शयानः

[4] मेरुश्चलन्निव युगक्षयसन्निकर्षे
शोषं व्रजन्निव महोदधिरप्रमेयः।
सूर्यः पतन्निव च मण्डलमात्रलक्ष्यः
शोकाद् भृशं शिथिलदेहमतिर्नरेन्द्रः॥१॥

[5] प्रतिहारी—हा हा एवंगतो महाराजः! [हा हा एव्वंगओ महाराओ!]

[6] काञ्चुकीयः—भवति, गच्छ।

[7] प्रतिहारी—आर्य, तथा । [अय्य, तह ।] (निष्क्रान्ता)

[8] काञ्चुकीयः—(सर्वतो विलोक्य) अहो नु खलु रामनिर्गमनदिनादारभ्य शून्यैवेयमयोध्या संलक्ष्यते ! कुतः

[9] नागेन्द्रा यवसाभिलापविमुखाः सास्रेक्षणा वाजिनो
हेषाशून्यमुखाः सवृद्धवनितावालाश्च पौरा जनाः ।
त्यक्ताहारकथाः सुदीनवदनाः क्रन्दन्त उच्चैर्दिशा
रामो याति यया सदारसहजस्तामेव पश्यन्त्यमी ॥२॥

[10] यावदहमपि महाराजस्य समीपवर्ती भविष्यामि । (परिक्रम्यावलोक्य) अये, अयं महाराजो महादेव्या सुमित्रया च सुदुःसहमपि पुत्रविरहसमुद्भवं शोकं निगृह्यात्मानमेव संस्थापयन्तीभ्यामन्वास्यमानस्तिष्ठति । कष्टा खल्ववस्था वर्तते । एष एष महाराजः ।

[11] पतत्युत्थाय चोत्थाय हा हेत्युच्चैर्लपन् मुहुः ।
दिशं पश्यति तामेव यया यातो रघूद्वहः ॥३॥
( निष्क्रान्तः )

[12] मिश्रविष्कम्भकः

[13] (ततः प्रविशति यथानिर्दिष्टो राजा देव्यौ च)

[14] राजा—*हा वत्स ! राम ! जगतां नयनाभिराम !
हा वत्स लक्ष्मण ! सलक्षणसर्वगात्र !
हा साध्वि मैथिलि ! पतिस्थितचित्तवृत्ते !
हा हा गताः किल वनं बत मे तनूजाः ॥४॥

---

* हा राम ! लोकमहणाभिराम ! हा लक्ष्मण ! भ्रातृषु लक्ष्मीभूत !
हा साध्वि वैदेहि ! कुलप्रदीपे ! हा पार्थिवेश ! [illegible] !

[24] राजा—का त्वं भोः ?

[25] कौसल्या—[अस्निग्धपुत्रप्रसविनी खल्वहम्
[असिणिद्धपुत्तप्पसविणी खु अहं ।]

[26] राजा—किं किं सर्वजनहृदयनयनाभिरामस्य रामस्य जननी त्वमसि कौसल्या ?

[27] कौसल्या—महाराज, सैव मन्दभागिनी खल्वहम् !
[महाराअ, सा एव्व मन्दभाइणी खु अहं ! ]

[28] राजा—कौसल्ये, सारवती खल्वसि । त्वया हि खलु रामो गर्भे धृतः ।

[29] अहं हि दुःखमत्यन्तमसह्यं ज्वलनोपमम् ।
नैव सोढुं न संहर्तुं शक्नोमि मुषितेन्द्रियः ॥९॥

[30] (सुमित्रां विलोक्य) इयमपरा का ?

[31] कौसल्या—महाराज, वत्स लक्ष्मण........
[महाराअ, वच्छ ल्क्खण ... .] (इत्यर्धोक्ते)

[32] राजा—(सहसोत्थाय) क्वासौ क्वासौ लक्ष्मणः ? न दृश्यते ! भोः कष्टम् !

[33] (देव्यौ ससंभ्रममुत्थाय राजानमवलम्बेते)

[34] कौसल्या—महाराज, वत्सलक्ष्मणस्य जननी सुमित्रेति वक्तुं मयोपक्रान्तम्। [महाराअ, वच्छलक्खणस्स जणणी सुमित्त त्ति वत्तुं मए उवक्कन्तं]

[35] राजा—अयि सुमित्रे,

[36] तवैव पुत्रः सत्पुत्रो येन नक्तन्दिवं वने ।
रामो रघुकुलश्रेष्ठश्छाययेवानुगम्यते ॥१०॥

[37] (प्रविश्य) काञ्चुकीयः—जयतु महाराजः ! एष खलु तत्रभवान् सुमन्त्रः प्राप्तः ।

[15] चित्तमिद भो ! यद्भ्रातृस्नेहात् पितरि विमुक्तस्नेहमपि तावल्लक्ष्म द्रष्टुमिच्छामि ! वधु, वैदेहि !

[16] रामेणापि परित्यक्तो लक्ष्मणेन च गर्हितः
अयशोभाजनं लोके परित्यक्तस्त्वयाप्यहम् ॥५॥

[17] पुत्र राम, वत्स लक्ष्मण, वधु वैदेहि, प्रयच्छत मे प्रतिवच पुत्रका ! शून्यमिदं भो ! न मे कश्चित् प्रतिवचन प्रयच्छति कौसल्यामात, कासि ?

[18] सत्यसन्ध ! जितक्रोध ! विमत्सर ! जगत्प्रिय !
गुरुशुश्रूषणे युक्त ! प्रतिवाक्यं प्रयच्छ मे ॥६॥

[19] हा क्वासौ सर्वजनहृदयनयनाभिरामो राम ? क्वासौ मयि गुर्व वृत्ति ? क्वासौ शोकार्तेष्वनुकम्पा ? क्वासौ तृणवद्गणितराज्यैश्वर्य ? पु राम, वृद्ध पितरं मा परित्यज्य किमसम्बद्धेन धर्मेण ते कृत्यम् ? ह धिक् ! कष्टं भो !

[20] सूर्य इव गतो रामः सूर्यं दिवस इव लक्ष्मणोऽनुगतः ।
सूर्यदिवसावसाने छायेव न दृश्यते सीता ॥७॥

[1] (ऊर्ध्वमवलोक्य) भो कृतान्तहतक !

[22] अनपत्या वयं रामः पुत्रोऽन्यस्य महीपतेः ।
वने व्याघ्री च कैकेयी त्वया किं न कृतं त्रयम् ॥८॥

[23] कौसल्या—(सरुदितम्) अलमिदानीं महाराजोऽतिमात्र सन्त परवशमात्मानं कर्तुम् । ननु सा तौ च कुमारौ महाराजस्य समयावसा प्रेक्षितव्या भविष्यन्ति । [अलं दाणिं महाराओ अदिमत्त स तप्पिअ परवा अत्ताणं कादुं । णं सा ते अ कुमारा महाराअस्स समआवसाणे पेक्खिदव्व भविस्सन्ति ! ]

[24] राजा—का त्वं भोः ?

[25] कौसल्या—[अस्निग्धपुत्रप्रसविनी खल्वहम् ।]
[असिणिद्धपुत्तप्पसविणी खु अहं ।]

[26] राजा—किं किं सर्वजनहृदयनयनाभिरामस्य रामस्य जननी त्वमसि कौसल्या ?

[27] कौसल्या—महाराज, सैव मन्दभागिनी खल्वहम् !
[महाराअ, सा एव्व मन्दभाइणी खु अहं !]

[28] राजा—कौसल्ये, सारवती खल्वसि । त्वया हि खलु रामो गर्भे धृतः ।

[29] अहं हि दुःखमत्यन्तमसह्यं ज्वलनोपमम् ।
नैव सोढुं न संहर्तुं शक्नोमि क्षुपितेन्द्रियः ॥९॥

[30] (सुमित्रां विलोक्य) इयमपरा का ?

[31] कौसल्या—महाराज, वत्स लक्ष्मण........
[महाराअ, वच्छ लक्खण ....] (इत्यर्धोक्ते)

[32] राजा—(सहसोत्थाय) क्वासौ क्वासौ लक्ष्मणः ? न दृश्यते ! भोः कष्टम् !

[33] (देव्यौ ससंभ्रममुत्थाय राजानमवलम्बेते)

[34] कौसल्या—महाराज, वत्सलक्ष्मणस्य जननी सुमित्रेति वक्तुं मनोपक्रान्तम्। [महाराअ, वच्छलक्खणस्स जणणी सुमित्त त्ति वत्तु मए उवक्कन्तं]

[35] राजा—अयि सुमित्रे,

[36] तवैव पुत्रः सत्पुत्रो येन नक्तन्दिवं वने ।
रामो रघुकुलश्रेष्ठश्छाययेवानुगम्यते ॥१०॥

[37] (प्रविश्य) काञ्चुकीयः—जयतु महाराजः ! एष खलु तत्रभवान् सुमन्त्रः प्राप्तः ।

राजा—(सहसोत्थाय सहर्षम्) अपि रामेण ?

काञ्चुकीयः—न खलु । रथेन ।

राजा—कथं कथं रथेन केवलेन ? (इति मूर्छितः पतति)

देव्यौ—महाराज, समस्ससिहि, समस्ससिहि ।
[महाराज, समाश्वसिहि, समाश्वसिहि । ] (गात्राणि परामृशतः)

काञ्चुकीयः—भो कष्टम् ! ईदृग्विधाः पुरुषविशेषा ईदृशी-मापदं प्राप्नुवन्तीति विधिरनतिक्रमणीयः । महाराज, समाश्वसिहि समाश्वसिहि ।

राजा—(किञ्चित् समाश्वस्य) बालके, सुमन्त्र एक एव ननु प्राप्तः ?

काञ्चुकीयः—महाराज, अथ किम् ।

राजा—कष्टं भो !

शून्यः प्राप्तो यदि रथो भग्नो मम मनोरथः ।
नूनं दशरथं नेतुं कालेन प्रेषितो रथः ॥११॥

तेन हि शीघ्रं प्रवेश्यताम् ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । (निष्क्रान्तः)

राजा—धन्याः खलु वने वातास्तटाकपरिवर्तिनः ।
विचरन्तं वने रामं ये स्पृशन्ति यथासुखम् ॥१२॥

(प्रविश्य) सुमन्त्रः—(सवैक्लव्यं निरूप्य, सशोकम्)

एते भृत्याः स्वानि कर्माणि हित्वा
स्नेहाद्रामे जातबाष्पाकुलाक्षाः ।
चिन्तादीनाः शोकमन्दप्रदेहा
निःशेषान्तं पार्थिवं गर्हयन्ति ॥१३॥

[51] (उपेत्य) जयतु महाराजः ।

[52] **राजा**—भ्रातः सुमन्त्र, क्व मे ज्येष्ठो रामः ? ...
नहि नहि युक्तमभिहितं मया ।

[53] क्व ते ज्येष्ठो रामः ? प्रियसुत, सुतः सा क्व दुहिता
विदेहानां भर्तुर्निरतिशयभक्तिर्गुरुजने ?
क्व वा सौमित्रिर्मो हतपितृकमासन्नमरणं
किमप्याहुः किं ते सकलजनशोकार्णवकरम् ॥१४॥

[54] **सुमन्त्रः**—महाराज, मा मैवममङ्गलवचनानि भाषिष्ठाः ।
अचिरादेव तान् द्रक्ष्यसि ।

[55] **राजा**—सत्यमयुक्तमभिहितं मया । नायं तपस्विनामुचितः प्रश्नः ।
तत् कथ्यताम्—'अपि तपस्विनां तपो वर्धते ? अप्यरण्यानि स्वाधीनानि
विचरन्ती वैदेही न परिखिद्यते ? '

[56] **सुमित्रा**—सुमन्त्र, बहुवल्कलालंकृतशरीरा बालाप्यबालचारित्रा
भर्तुः सहधर्मचारिणी अस्मान् महाराजं च किञ्चिन्नालपति ?
[सुमन्त, बहुवक्कलालङ्किदसरीरा बाला वि अबालचारित्ता भत्तुणो सहधम्म-
आरिणी अह्मे महाराअं च किंवि णाळवदि ?]

[57] **सुमन्त्रः**—सर्वं एव महाराजम्....

[58] **राजा**—न न; श्रोत्ररसायनैर्मम हृदयातुरौषधैस्तेषां नामधेयैरेव
श्रावय ।

[59] **सुमन्त्रः**—यदाज्ञापयति महाराजः । आयुष्मान् रामः ।

[60] **राजा**—राम इति ? अयं रामः । तन्नामश्रवणात् स्पृष्ट इव
मे प्रतिभाति । ततस्ततः ?

[61] **सुमन्त्रः**—आयुष्मान् लक्ष्मणः ।

राजा—(आत्मन्यावलोक्य)

अयममरपतेः सखा दिलीपो रघुरयमत्रभवानजः पिता मे ।
किमभिगमनकारणं भवद्भिः सह वसने समयो ममापि तत्र ॥

राम, वैदेहि, लक्ष्मण, अहमितः पितॄणां सकाशं गच्छामि । हे पितरः, अयमयमागच्छामि । (मूर्छया पतति)

(काञ्चुकीयो यवनिकास्तरणं करोति)

सर्वे—हा हा महाराजः ! [हा हा महाराओ ! ]

( निष्क्रान्ताः सर्वे )

## इति द्वितीयोऽङ्कः

## ॥ अथ तृतीयोऽङ्कः ॥

(ततः प्रविशति सुधाकारः)

सुधाकारः—(सम्मार्जनादीनि कृत्वा) भवतु, इदानीं कृतमत्र कार्यमार्यसंभवकस्याज्ञप्तम् । यावन्मुहूर्तं स्वप्स्यामि । (स्वपिति)
[भोदु, दाणिं किदं एत्थ कम्मं अय्यसम्भवअस्स आणत्तं । जाव मुहुत्तं सुविस्सं । ]

(प्रविश्य) भटः—(चेटमुपगम्य, ताडयित्वा) अहो दास्याः पुत्र ! किमिदानीं कर्म न करोषि ? (ताडयति)
[अहो दासीएपुत्त ! किं दाणिं कम्मं ण करेसि ? ]

सुधाकारः—(बुद्ध्वा) ताडय मां, ताडय माम् !
[ ताडेहि मं, ताडेहि मं । ]

भटः—ताडिते त्वं किं करिष्यसि ? [ताडिदे तुवं किं करिस्ससि]

सुधाकारः—[अधन्यस्य मम हस्तशीर्षकेण बाहुमर्दनं नास्ति]
[अधण्णस्स मम हत्थसीसएण बाहुमद्दणं णत्थि । ]

[8] भटः—बाहुसहस्रेण किं कार्यम् ? [बाहुसहस्सेण किं कय्यं ?]

सुधाकारः—त्वां हनिष्यामि । [तुवं हणिस्स।]

[9] भटः—एहि दास्याःपुत्र ! मृते मोक्ष्यामि ।

[एहि दासीएपुत्त, मुदे मुञ्चस्स।] (पुनरपि ताडयति)

[9] सुधाकारः—(रुदित्वा) शक्यमिदानीं भर्तः मेऽपराधं ज्ञातुम् ? [सक्क दाणि भट्टा मे अवराहं जाणिदुम् ?]

[10] भटः—नास्ति किलापराधो नास्ति ? ननु मया सन्दिष्टो भर्तृदारकस्य रामस्य राज्यविभ्रष्टकृतसन्तापेन स्वर्गं गतस्य भर्तुर्दशरथस्य प्रतिमागेहं द्रष्टुमद्य कौसल्यापुरोगैः सर्वैरन्तःपुरैरिहागन्तव्यमिति ? अत्रेदानीं त्वया किं कृतम् ? [णत्थि किल अवराहो णत्थि ? णं मए सन्दिट्ठो भट्टिदारअस्स रामस्स रज्जविब्भट्ठकिदसन्दावेण सग्गं गदस्स भट्टिणो दसरहस्स पडिमागेहं दट्ठुं अज्ज कोसल्लापुरोएहि सव्वेहि अन्तेउरेहि इह आअन्तव्वं त्ति । एत्थ दाणि तुए किं किदं ?]

[11] सुधाकारः—पश्यतु भर्ता । अपनीतकपोतसन्दानकं तावद् गर्भगृहम् । संधवर्णकदत्तचन्दनपञ्चाङ्गुला भित्तयः । अवसक्तमाल्यदामशोभीनि द्वाराणि । प्रकीर्णा वालुकाः । अत्रेदानीं मया किं न कृतम् ? [पेक्खदु भट्टा । अवणीदकवोदसन्दाणअं दाव गब्भगिहं । सोहवण्णअदत्तचन्दणपञ्चङ्गुला भित्तीओ ओसत्तमल्लदामसोहीणि दुवाराणि। पइण्णा वालुआ। एत्थ दाणि मए किं ण किदं ?]

[12] भटः—यद्येवं विश्वस्तो गच्छ । यावदहमपि सर्वं कृतमिति अमात्याय निवेदयामि । [जइ एवं विस्सत्थो गच्छ। जाव अहं वि सव्वं किदं त्ति अमच्चस्स णिवेदेमि।]

(निष्क्रान्तौ)

[13] प्रवेशकः

राजा—(आचम्यावलोक्य)

अयममरपतेः सखा दिलीपो रघुरयमत्रभवानजः पिता मे ।
किमभिगमनकारणं भवद्भिः सह वसने समयो ममापि तत्र ॥

राम, वैदेहि, लक्ष्मण, अहमित पितृणा सकाश गच्छामि। हे पितर, अयमयमागच्छामि। (मूर्छया पतति)

(काञ्चुकीयो यवनिकास्तरण करोति)

सर्वे—हा हा महाराज ! [हा हा महाराओ ! ]

(निष्क्रान्ता सर्वे)

## इति द्वितीयोऽङ्कः

## ॥ अथ तृतीयोऽङ्कः ॥

(ततः प्रविशति सुधाकार )

सुधाकारः—(सम्मार्जनादीनि कृत्वा) भवतु, इदानीं कृतमत्र कार्यमार्यसम्भवकस्याज्ञप्तम् । यावन्मुहूर्तं स्वप्स्यामि । (स्वपिति)
[भोदु, दाणिं किद एत्थ कय्य अय्यसम्भवअस्स आणत्त । जाव मुहुत्त सुविस्स । ]

(प्रविश्य) भटः—(उपगम्य, ताडयित्वा) अहो दास्या पुत्र ! किमिदानीं कर्म न करोषि ? (ताडयति)
[अहो दासीएपुत्त ! किं दाणिं कम्म ण करेसि ? ]

सुधाकारः—(रुदित्वा) ताडय मा, ताडय माम् ।
[ताडेहि म, ताडेहि म । ]

भटः—ताडिते त्व किं करिष्यसि ? [ताडिदे तुव किं करिस्ससि]

सुधाकारः—[अधन्यस्य मम कर्तरीस्पर्शेन बाहुमहस्य नास्ति]
[अहण्णस्स मम कत्तरीफस्स णत्थि बाहुसहस्स णत्थि । ]

[8] भटः—बाहुसहस्रेण किं कार्यम् ? [बाहुसहस्सेण किं कय्यं ?]

सुधाकारः—त्वां हनिष्यामि ! [तुमं हणिस्सं।]

[9] भटः- एहि दास्याःपुत्र ! मृते मोक्ष्यामि ।
[एहि दासीएपुत्त, मुदे मुञ्चस्सं।] (पुनरपि ताडयति)

[9] सुधाकारः—(रुदित्वा) शक्यमिदानीं भर्तः मेऽपराधं ज्ञातुम् ?
[सक्कं दाणि भट्टा मे अवराहं जाणिदुम् ?]

[10] भटः—नास्ति किलापराधो नास्ति ? ननु मया सन्दिष्टो भर्तृदारकस्य रामस्य राज्यविभ्रष्टकृतसन्तापेन स्वर्गं गतस्य भर्तुर्दशरथस्य प्रतिमागेहं द्रष्टुमद्य कौसल्यापुरोगैः सर्वैरन्तःपुरैरिहागन्तव्यमिति ? अथेदानीं त्वया किं कृतम् ? [णत्थि किल अवराहो णत्थि ? ण मए सन्दिट्ठो भट्टिदारअस्स रामस्स रज्जविब्भट्ठकिदसन्दावेण सग्गं गदस्स भट्टिणो दसरहस्स पडिमागेहं दट्ठुं अज्ज कोसल्लापुरोएहि सव्वेहि अन्तेउरेहि इह आअन्तव्वं त्ति । एत्थ दाणिं तुए किं किदं ?]

[11] सुधाकारः—पश्यतु भर्ता । अपनीतकपोतसन्तानकं तावद् गर्भगृहम् । सौधपर्णकदत्तचन्दनपञ्चाङ्गुला भित्तयः । अवसक्तमाल्यदामशोभीनि द्वाराणि । प्रकीर्णा वालुकाः । अथेदानीं मया किं न कृतम् ? [पेक्खदु भट्टा । अवणीदकवोदसन्दाणअं दाव गब्भगिहं । सोहवण्णअदत्तचन्दणपञ्चङ्गुला भित्तीओ ओसत्तमल्लदामसोहीणि दुवाराणि। पइण्णा वालुआ। एत्थ दाणिं मए किं ण किदं ?]

[12] भटः—यद्येवं विश्रब्धो गच्छ । यावदहमपि सर्वं कृतमिति अमात्याय निवेदयामि । [जइ एवं विस्सद्धो गच्छ। जाव अहं वि सव्वं किदं त्ति अमच्चस्स णिवेदेमि।]

(निष्क्रान्तौ)

[13] प्रवेशकः

[14] (ततः प्रविशति भरतो रथेन सूतश्च)

[15] भरतः—(सावेगम्) सूत, चिरं मातुलपरिचयादविज्ञातवृत्तान्तोऽस्मि। श्रुतं मया दृढमकल्यशरीरो महाराज इति। तदुच्यताम्—

[16] पितुर्मे को व्याधिः?

[17] सूतः— हृदयपरितापः खलु महान्।

[18] भरतः—किमाहुस्तं वैद्याः?

[19] सूतः— न खलु भिषजस्तत्र निपुणाः।

[20] भरतः—किमाहारं भुङ्क्ते? शयनमपि?

[21] सूतः— भूमौ निरशनः

[22] भरतः—किमाशा स्याद्?

[23] सूतः— दैवं

[24] भरतः— स्फुरति हृदयं वाहय रथम्॥१

[25] सूतः—यदाज्ञापयत्यायुष्मान्। (रथं वाहयति)

[26] भरतः—(रथवेगं निरूप्य) अहो नु खलु रथवेगः। एते ते

द्रुमा धावन्तीव द्रुतरथगतिक्षीणविषया
नदीवोद्वृत्ताम्बुर्निपतति मही नेमिविवरे।
अरव्यक्तिर्नष्टा स्थितमिव जवाच्चक्रवलयं
रजश्चाश्वोद्धूतं पतति पुरतो नानुपतति॥२॥

[27] सूतः—आयुष्मन्, सोपस्नेहतया वृक्षाणामभितः खल्वयोध्या भवितव्यम्।

[28] भरतः—अहो नु खलु स्वजनदर्शनोत्सुकस्य त्वरता मे मनसः सम्प्रति हि—

[35] पतितमिव शिरः पितुः पादयोः
स्निह्यतेवास्मि राज्ञा समुत्थापितः ।
त्वरितमुपगता इव भ्रातरः
क्लेदयन्तीव मामश्रुभिर्मातरः ॥३॥

[37] सदृश इति महानिति व्यायतश्चेति
भृत्यैरिवाहं स्तुतः सेवया ।
परिहसितमिवात्मनस्तत्र पश्यामि
वेषं च भाषां च सौमित्रिणा ॥४॥

[38] सूतः—(आत्मगतम्) भोः कष्टम् ! यदयमविज्ञाय महाराज-विनाशमुदर्के निष्फलामाशां परिवहन्नयोध्यां प्रवेक्ष्यति कुमारः । जानद्भिरप्यस्माभिर्न निवेद्यते । कुतः,

[30] पितुः प्राणपरित्यागं मातुरैश्वर्यलुब्धताम् ।
ज्येष्ठभ्रातुः प्रवासं च त्रीन् दोषान् कोऽभिधास्यति ॥५॥

[31] (प्रविश्य) भटः—जयतु कुमारः !

[32] भरतः—भद्र, किं शत्रुघ्नो माम् [1]अभिगतः ?

[33] भटः—अभिगत एव खलु वर्तते कुमार । उपाध्यायास्तु भवन्तमाहुः ।

[34] भरतः—किमिति किमिति ?

[35] भटः—"एकनाडिकावशेषः कृत्तिकाविषयः । तस्मात् प्रतिपन्नायामेव रोहिण्यामयोध्यां प्रवेक्ष्यति कुमारः" ।

[39] भरतः—बाढमेवम् । न मया गुरुवचनमतिक्रान्तपूर्वम् । गच्छ त्वम् ।

[40] भटः—यदाज्ञापयति कुमारः । (निष्क्रान्तः)

---

[1] अभितः

देवकुलिकः—अयं खलु तावत् प्रियावियोगनिर्वेदपरित्यक्तराज्यभारो नित्यावभृथस्नानप्रशान्तरजा अजः।

भरतः—नमोऽस्तु श्लाघनीयपश्चात्तापाय। (दशरथस्य प्रतिमामवलोकयन् पर्याकुलो भूत्वा) भोः, बहुमानव्याक्षिप्तेन मनसा सुव्यक्तं नावधारितम्। अभिधीयतां कस्तावदत्रभवान्।

देवकुलिकः—अयं दिलीपः।

भरतः—पितृपितामहो महाराजस्य। ततस्ततः?

देवकुलिकः—अत्रभवान् रघुः।

भरतः—पितामहो महाराजस्य! ततस्ततः?

देवकुलिकः—अत्रभवानजः।

भरतः—पिता तातस्य। किमिति, किमिति?

देवकुलिकः—अयं दिलीपः, अयं रघुः, अयमजः।

भरतः—भवन्तं किंचित् पृच्छामि। धरमाणानामपि प्रतिमाः स्थाप्यन्ते?

देवकुलिकः—न खलु; अतिक्रान्तानामेव।

भरतः—तेन ह्यापृच्छे भवन्तम्।

देवकुलिकः—तिष्ठ।

येन प्राणाश्च राज्यं च स्त्रीशुल्कार्थे विसर्जिताः।
इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसि ॥९॥

भरतः—हा तात! (मूर्छितः पतति। पुनः प्रत्यागत्य)

हृदय भव सकामं यत्कृते शङ्कसे त्वं
शृणु पितृनिधनं तद्गच्छ धैर्यं च तावत्।

स्पृशति तु यदि नीचो मामयं शुल्कशब्द-
स्त्वथ च भवति सत्यं तत्र देहो विशोध्यः ॥१०॥

[78] आर्य !

[79] देवकुलिकः—आर्येति इक्ष्वाकुकुलालापः खल्वयम् । कच्चित् कैकेयीपुत्रो भरतो भवान् ननु ?

[80] भरतः—अथ किम्, अथ किम् । दशरथपुत्रो भरतोऽस्मि, न कैकेय्याः ।

[81] देवकुलिकः—तेन ह्यापृच्छे भवन्तम् ।

[82] भरतः—तिष्ठ, शेषमभिधीयताम् ।

[83] देवकुलिकः—का गतिः । श्रूयताम् । उपरतस्तत्रभवान् दशरथः। सीतालक्ष्मणसहायस्य रामस्य वनगमनप्रयोजनं न जाने ।

[84] भरतः—कथं, कथमार्योऽपि वनं गतः ? (द्विगुणं मोहमुपगतः)

[85] देवकुलिकः—कुमार, समाश्वसिहि समाश्वसिहि ।

[86] भरतः—(समाश्वस्य)

अयोध्यामटवीभूतां पित्रा भ्रात्रा च वर्जिताम् ।
पिपासार्तोऽनुधावामि क्षीणतोयां नदीमिव ॥११॥ R.C.

[87] आर्य, विस्तरश्रवणं मे मनसः स्थैर्यमुत्पादयति । तत् सर्वमनवशेषमभिधीयताम् ।

[88] देवकुलिकः—श्रूयताम् । तत्रभवता राज्ञाभिषिच्यमाने तत्रभवति रामे, भवतो जनन्याभिहितं किल ।

[89] भरतः—तिष्ठ ।

[90] तं स्मृत्वा शुल्कदोषं भवतु मम सुतो राजेत्यभिहितं
तद्वैर्येणाश्वसत्या व्रज सुत वनमित्यार्योऽप्यभिहितः ।
तं दृष्ट्वा बद्धचीरं निधनमसदृशं राजा ननु गतः
पात्यन्ते धिक्प्रलापा ननु मयि सदृशाः दोषाः प्रकृतिभिः॥
(मोहमुपगतः)

[91] (नेपथ्ये) उत्सरतार्याः, उत्सरत । [उस्सरह अय्या, उस्सरह !]

[92] देवकुलिकः—(विलोक्य) अये,

[93] काले खल्वागता देव्यः पुत्रे मोहमुपागते ।
हस्तस्पर्शो हि मातॄणामजलस्य जलाञ्जलिः ॥१३॥

[94] (ततः प्रविशन्ति देव्यः सुमन्त्रश्च)

[95] सुमन्त्रः—इत इतो भवत्यः ।

[96] इदं गृहं तत् प्रतिमानृपस्य नः समुच्छ्रयो यस्य स हर्म्यदुर्लभः ।
अयन्त्रितैरप्रतिहारिकागतैर्विना प्रणामं पथिकैरुपास्यते ॥१४॥

[97] (प्रविश्यावलोक्य) भवत्यः, न खलु न खलु प्रवेष्टव्यम् ।

[98] अयं हि पतितः कोऽपि वयस्थ इव पार्थिवः ।

[99] देवकुलिकः—
परशङ्कामलं कर्तुं गृह्यतां भरतो ह्ययम् ॥ १५ ॥
(निष्क्रान्तः)

[100] देव्यः—(सहसोपगम्य) हा जात ! भरत ! [हा जाद ! भरद !]

[101] भरतः—(किञ्चित् समाश्वस्य) आर्य !

[102] सुमन्त्रः—जयतु महा....(इत्यर्धोक्ते सविषादम्) अहो, स्वर-सादृश्यम् ! मन्ये प्रतिमास्थो महाराजो व्याहरतीति ।

[103] भरतः—अथ मातॄणामिदानीं कावस्था ?

[104] देव्यः—जात, एषा नोऽवस्था ! [जाद, एसा णो अवत्था !]
(अवगुण्ठनमपनयन्ति)

[105] सुमन्त्रः—भवत्यः, निगृह्यतामुत्कण्ठा ।

[106] भरतः—(सुमन्त्रं विलोक्य) सर्वमसुदाचारसन्निकर्षस्तु मां सूचयति । कच्चित् तातसुमन्त्रो भवान् ननु ?

[107] सुमन्त्रः—कुमार, अथ किम् । सुमन्त्रोऽस्मि ।

[108] अन्वास्यमानश्चिरजीवदोषैः
कृतघ्नभावेन विडम्ब्यमानः ।
अहं हि तस्मिन् नृपतौ विपन्ने
जीवामि शून्यस्य रथस्य सूतः ॥१६॥

[109] भरतः—हा तात ! (उत्थाय) तात, अभिवादनक्रममुपदेष्टुम् इच्छामि मातृणाम् ।

[110] सुमन्त्रः—बाढम् । इयं तत्रभवतो रामस्य जननी देवी कौसल्या ।

[111] भरतः—अम्ब, अनपराद्धोऽहमभिवादये ।

[112] कौसल्या—जात, निस्सन्तापो भव । [जाद, णिस्सन्दावो होहि]

[113] भरतः—(आत्मगतम्) आक्रुष्ट इवास्म्यनेन । (प्रकाशम्) अनुगृहीतोऽस्मि । ततस्ततः ?

[114] सुमन्त्रः—इयं तत्रभवतो लक्ष्मणस्य जननी देवी सुमित्रा ।

[115] भरतः—अम्ब, लक्ष्मणेन अतिसन्धितोऽहमभिवादये ।

[116] सुमित्रा—जात, यशोभागी भव । [जाद, जसोभाई होहि ।]

[117] भरतः—अम्ब, इदं प्रयतिष्ये । अनुगृहीतोऽस्मि । ततस्ततः ?

[118] सुमन्त्रः—इयं ते जननी ।

[119] भरतः—(सरोषमुत्थाय) आः पापे !

मम मातुश्च मातुश्च मध्यस्था त्वं न शोभसे ।
गङ्गायमुनयोर्मध्ये कुनदीव प्रवेशिता ॥१७॥

कैकेयी—जात, किं मया कृतम्? [जाद, किं मए किद?]

भरतः—किं कृतमिति वदसि?

वयमयशसा चीरेणार्यो नृपो गृहमृत्युना
प्रततरुदितैः कृत्स्नायोध्या मृगैः सह लक्ष्मणः ।
दयिततनयाः शोकेनाम्बाः स्नुषाध्वपरिश्रमैः
धिगिति वचसा चोग्रेणात्मा त्वया ननु योजिता॥

कौसल्या—जात, सर्वसमुदाचारमध्यस्थ, किं न वन्दसे मातर
[जाद, सव्वसमुदाआरमज्झत्थो किं ण वन्दसि मादरं?]

भरतः—मातरमिति? अम्ब, त्वमेव मे माता। अम्ब, अभिवाद

कौसल्या—नहि नहि, इयं ते जननी ।
[णहि णहि, इअं दे जणणी ।]

भरतः—आसीत् पुरा । न तु इदानीम् । पश्यतु भवती

त्यक्त्वा स्नेहं शीलसङ्क्रान्तदोषैः
पुत्रास्तावत्त्वन्यपुत्राः क्रियन्ते ।
लोकेऽपूर्वं स्थापयाम्येष धर्मं
भर्तृद्रोहादस्तु माताप्यमाता ॥१९॥

कैकेयी—जात, महाराजस्य सत्यवचनं रक्षन्त्या मया तथोक्तम्
[जाद, महाराअस्स सच्चवअणं रक्खन्तीए मए तह उत्तं ।]

भरतः—किमिति किमिति?

कैकेयी—पुत्रको मे राजा भवतु इति ।
[पुत्तओ मे राजा होदु त्ति ।]

[132] भरतः—अथ स इदानीमार्योऽपि भवत्याः कः ?

[133] पितुर्मे नौरसः पुत्रः ? न क्रमेणाभिषिच्यते ?
दयिता भ्रातरो न स्युः ? प्रकृतीनां न रोचते ?

[134] कैकेयी—जात, शुल्कलुब्धा ननु प्रष्टव्या ?
[जाद, सुक्कलुद्धा णणु पुच्छिदव्वा ?]

[135] भरतः—वल्कलैर्हृतराजश्रीः पदातिः सह भार्यया ।
वनवासं त्वयाज्ञप्तः शुल्केऽप्येतदुदाहृतम् ॥२१॥

[136] कैकेयी—जात, देशकाले निवेदयामि। [जाद, देसकाले णिवेदेमि।]

[137] भरतः—अयशसि यदि लोभः कीर्तयित्वा किमस्मान्
किमु नृपकलतर्षः किं नरेन्द्रो न दद्यात् ।
अथ तु नृपतिमातेत्येष शब्दस्तवेष्टो
वदतु भवति सत्यं किं तवार्यो न पुत्रः ॥२२॥

[138] कष्टं कृतं भवत्या !

[139] त्वया राज्यैषिण्या नृपतिरसुभिर्नैव गणितः
सुतं ज्येष्ठं च त्वं व्रज वनमिति प्रेषितवती ।
न शीर्णं यद् दृष्ट्वा जनकतनयां वल्कलवतीम्
अहो धात्रा सृष्टं भवति हृदयं वज्रकठिनम् ॥२३॥

[140] सुमन्त्रः—कुमार, एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य भवन्तं प्रत्युद्गतौ विज्ञापयतः ।

[141] गोपहीना यथा गावो विलयं यान्त्यपालिताः ।
एवं नृपतिहीना हि विलयं यान्ति वै प्रजाः ॥२४॥

[142] भरतः—अनुगच्छन्तु मां प्रकृतयः ।

[143] सुमन्त्रः—अभिषेकं विसृज्य क्व भवान् यास्यति ?

[144] भरतः—अभिषेकमिति ? इहात्रभवत्यै प्रदीयताम् ।

[145] सुमन्त्रः—क्व भवान् यास्यति ?

[146] भरतः—

तत्र यास्यामि यत्रासौ वर्तते लक्ष्मणप्रियः ।
नायोध्या तं विनायोध्या सायोध्या यत्र राघवः ॥

(निष्क्रान्ताः सर्वे)

## इति तृतीयोऽङ्कः

## ॥ अथ चतुर्थोऽङ्कः ॥

(ततः प्रविशतः चेट्यौ)

[1] विजया—हला नन्दिनिके, भण भण । अद्य कौसल्यापुरोगैः सर्वैरन्तःपुरैः प्रतिमागेहं द्रष्टुं गतैस्तत्र किल भर्तृदारको भरतो दृष्टः । अहं च मन्दभागा द्वारे स्थिता । [हला णन्दिणिए, भणहि भणेहि । अज्ज कोसल्लापुरोगेहिं सव्वेहिं अन्तेउरेहिं पडिमागेहं दट्ठुं गदेहिं तहिं किल भट्टिदारओ भरदो दिट्ठो । अहं च मन्दभाआ दुवारे ट्ठिदा ।]

[2] नन्दिनिका—हला, दृष्टोऽस्माभिः कौतूहलेन भर्तृदारको भरतः । [हला, दिट्ठो अह्मेहि कोदूहलेण भट्टिदारओ भरदो ।]

[3] विजया—भट्टिनी कुमारेण किं भणिता ? [भट्टिणी कुमारेण किं भणिआ ?]

[4] नन्दिनिका—किं भणितम् ? अवलोकितुमपि नेच्छति कुमारः । [किं भणिदं ? ओलोइदुं वि णेच्छदि कुमारो ।]

[5] विजया—अहो अत्याहितम्! राज्यलुब्धया भर्तृदारकस्य रामस्य राज्यविभ्रष्टं कुर्वत्यात्मनो वैधव्यमादिष्टम्। लोकोऽपि विनाशं गमितः। निर्घृणा खलु भट्टिनी! पापकं कृतम्! [अहो अच्चाहिदम्। रज्जलुद्धाए भट्टिदारअस्स रामस्स रज्जविब्भट्टं करन्तीए अत्तणो वेहव्वं आदिट्ठं। लोवो वि विणासं गमिओ। णिग्घिणा हु भट्टिणी! पावअं किदं!]

[6] नन्दिनिका—हला, शृणु। प्रकृतिभिरानीतमभिषेकं विसृज्य रामतपोवनं गतः कुमारः। [हला, सुणाहि। पईदीहि आणीदं अभिसेअं विसज्जिअ रामतवोवणं गदो कुमारो।]

[7] विजया—(सविषादम्) हम्! एवं गतः कुमारः। नन्दिनिके, एह्यावां भट्टिनीं पश्यावः। [हं! एवं गदो कुमारो! णन्दिणीए, एहि अम्हे भट्टिणिं पेक्खामो।] (निष्क्रान्ते)

[8] प्रवेशकः

[9] (ततः प्रविशति भरतो रथेन सुमन्त्रः सूतश्च)

[10] भरतः—स्वर्गं गते नरपतौ सुकृतानुयात्रे
पौराश्रुपातसलिलैरनुगम्यमानः।
द्रष्टुं प्रयाम्यकृपणेषु तपोवनेषु
रामाभिधानमपरं जगतः शशाङ्कम् ॥१॥

[11] सुमन्त्रः—एष एष आयुष्मान् भरतः।

[12] दैत्येन्द्रमानमथनस्य नृपस्य पुत्रो
यज्ञोपयुक्तविभवस्य नृपस्य पौत्रः।
भ्राता पितुः प्रियकरस्य जगत्प्रियस्य
रामस्य रामसदृशेन पथा प्रयाति ॥२॥

[13] भरतः—भोस्तात!

[14] सुमन्त्रः—कुमार, अयमस्मि ।

[15] भरतः—क्व तत्रभवान् ममार्यो रामः ? क्वासौ महाराजस्य प्रतिनिधिः ? क्व *सन्निदर्शनं सारवताम् ? क्वासौ प्रत्यादेशो राज्यलुब्धायाः कैकेय्याः ? क्व तत् पात्रं यशसः ? क्वासौ नरपतेः पुत्रः ? क्वासौ सत्यमनुव्रतः ?

[16] मम मातुः प्रियं कर्तुं येन लक्ष्मीर्विसर्जिता ।
तमहं द्रष्टुमिच्छामि दैवतं परमं मम ॥३॥

[17] सुमन्त्रः—कुमार, एतस्मिन् आश्रमपदे

[18] अत्र रामश्च सीता च लक्ष्मणश्च महायशाः ।
सत्यं शीलं च भक्तिश्च येषु विग्रहवत् स्थिता§ ॥४॥

[19] भरतः—तेन हि स्थाप्यतां रथः ।

[20] सूतः—यदाज्ञापयत्यायुष्मान् । (तथा करोति)

[21] भरतः—(रथादवतीर्य) सूत, एकान्ते विश्रामयाश्वान् ।

[22] सूतः—यदाज्ञापयत्यायुष्मान् । (निष्क्रान्तः)

[23] भरतः—भोस्तात, निवेद्यतां निवेद्यताम् !

[24] सुमन्त्रः—कुमार, किमिति निवेद्यते ?

[25] भरतः—राज्यलुब्धायाः कैकेय्याः पुत्रो भरतः प्राप्त इति ।

[26] सुमन्त्रः—कुमार, अलं गुरुजनापवादमभिधातुम् ।

[27] भरतः—सुष्ठु; न न्याय्यं परदोषमभिधातुम् । तेन हि उच्यतामिक्ष्वाकुकुलव्यङ्गभूतो भरतो दर्शनमभिलषतीति ।

[28] सुमन्त्रः—कुमार, नाहमेवं वक्तुं समर्थः । अथ पुनर्भरतः प्राप्त इति ब्रूयाम् ।

---

* तन्निदर्शनम् § स्थिताः

[37] भरतः—न न। नाम केवलमभिधीयमानमकृतप्रायश्चित्तमिव मे प्रतिभाति। किं ब्राह्मणानामपि परेण निवेदनं क्रियते? तस्मात् तिष्ठतु तातः। अहमेव निवेदयिष्ये। भो भोः। निवेद्यतां निवेद्यतां तत्र भवते पितृवचनकराय राघवाय—

[31] निर्घृणश्च कृतघ्नश्च प्राकृतः प्रियसाहसः।
भक्तिमानागतः कश्चित् कथं तिष्ठतु यात्विति ॥५॥

[31] (ततः प्रविशति रामः सीतालक्ष्मणाभ्याम्)

[32] रामः—(आकर्ण्य, सहर्षम्) सौमित्रे, किं शृणोषि? अयि विदेहराजपुत्रि, त्वमपि शृणोषि?

[33] कस्यासौ सदृशतरः स्वरः पितुर्मे
गाम्भीर्यात् परिभवतीव मेघनादम्।
यः कुर्वन् मम हृदयस्य बन्धुशङ्कां
सस्नेहः श्रुतिपथमिष्टतः प्रविष्टः ॥६॥

[34] लक्ष्मणः—आर्य, ममापि खल्वेष स्वरसंयोगो बन्धुजनबहुमानमावहति। एष हि,

[35] घनः स्पष्टो धीरः समदवृषभस्निग्धमधुरः
कलः कण्ठे वक्षस्यनुपहतसञ्चाररभसः।
यथास्थानं प्राप्य स्फुटकरणनानाक्षरतया
चतुर्णां वर्णानामभयमिव दातुं व्यवसितः ॥७॥

[36] रामः—सर्वथा नायमनान्यवस्य स्वरसंयोगः। स्नेहयतीव मे हृदयम्। वत्स लक्ष्मण, दृश्यतां तावत्।

[37] लक्ष्मणः—यदाज्ञापयत्यार्यः। (परिक्रामति)

[31] भरतः—अये, कथं न कश्चित् प्रतिवचनं प्रयच्छति ! किं खलु विज्ञातोऽस्मि कैकेय्या पुत्रो भरत प्राप्त इति ?

[39] लक्ष्मणः—(विलोक्य) अये, अयमार्यो राम. ! न न ! रूपसादृश्यम्

[40] मुखमनुपमं त्वार्यस्याभं शशाङ्कमनोहरं
मम पितृसमं पीनं वक्षः सुरारिशरक्षतम् ।
द्युतिपरिवृतस्तेजोराशिर्जगत्प्रियदर्शनो
नरपतिरियं देवेन्द्रो वा स्वयं मधुसूदनः ॥८॥

[41] (सुमन्त्रं दृष्ट्वा) अये, तात. !

[42] सुमन्त्रः—अये, कुमारो लक्ष्मणः !

[43] भरतः—एवं गुरुरयम् । आर्य, अभिवादये ।

[44] लक्ष्मणः—एह्येहि । आयुष्मान् भव । (सुमन्त्रं वीक्ष्य) तात, कोऽत्रभवान् ?

[45] सुमन्त्रः—कुमार,

[46] रघोश्चतुर्थोयमजात् तृतीयः
पितुः प्रकाशस्य तव द्वितीयः ।
यस्यानुजस्त्वं स्वकुलस्य केतोः
तस्यानुजोऽयं भरतः कुमारः ॥९॥

लक्ष्मणः—एह्येहीक्ष्वाकुकुमार ! स्वस्ति, आयुष्मान् भव ।

[48] असुरसमरदक्षैर्वज्रसंघृष्टचापै-
रनुपमबलवीर्यैः स्वैः कुलैस्तुल्यवीर्यः ।
रघुरिव स नरेन्द्रो यज्ञविश्रान्तकोशो
भव जगति गुणानां भाजनं श्राजितानाम् ॥१०॥

भरतः—अनुगृहीतोऽस्मि।

लक्ष्मणः—कुमार, इह तिष्ठ। त्वदागमनमार्याय निवेदयामि।

भरतः—आर्य, अचिरमिदानीमभिवादयितुमिच्छामि। शीघ्रं निवेद्यताम्।

लक्ष्मणः—बाढम्। (उपेत्य) जयत्वार्यः। आर्य,

अयं ते दयितो भ्राता भरतो भ्रातृवत्सलः।
संक्रान्तं यत्र ते रूपमादर्श इव तिष्ठति ॥११॥

रामः—वत्स लक्ष्मण, किमेवं भरतः प्राप्तः?

लक्ष्मणः—आर्य, अथ किम्।

रामः—मैथिलि, भरतावलोकनार्थं विशालीक्रियतां ते चक्षुः।

सीता—आर्यपुत्र, किं भरत आगतः?
[अय्यउत्त, किं भरदो आअदो?]

रामः—मैथिलि, अथ किम्।

अद्य खल्ववगच्छामि पित्रा मे दुष्करं कृतम्।
कीदृशस्तनयस्नेहो भ्रातृस्नेहोऽयमीदृशः ॥१२॥

लक्ष्मणः—आर्य, किं प्रविशतु कुमारः?

रामः—वत्स लक्ष्मण, इदमपि तावदस्मदभिप्रायमनुवर्तयितुम् इच्छसि? गच्छ, सत्कृत्य शीघ्रं प्रवेश्यतां कुमारः।

लक्ष्मणः—यदाज्ञापयत्यार्यः।

रामः—अथवा तिष्ठ त्वम्।

इयं स्वयं गच्छतु मानहेतोर्मातेव भावं तनये निवेश्य।
तुषारपूर्णोत्पलपत्रनेत्रा हर्षास्रमासारमिवोत्सृजन्ती ॥१३॥

[66] सीता—यदार्यपुत्र आज्ञापयति। (उत्थाय, परिक्रम्य भरतमवलोक्य) हृ ततस्तां वेलामिदानीं निष्क्रान्त आर्यपुत्र। नहि नहि, रूपसादृश्यम्। [ज अय्यउत्तो आणवेदि। (उत्थाय, परिक्रम्य भरतमवलोक्य) हृ तदो ■ वेळं दाणि णिक्कन्तो अय्यउत्तो। णहि णहि, रूवसादिस्स।]

[66] सुमन्त्रः—अये वधू।

[67] भरतः—अये, इयमत्रभवती जनकराजपुत्री।

■ इदं तत् स्त्रीमयं तेजो जातं क्षेत्रोदराद्धलात्।
जनकस्य नृपेन्द्रस्य तपसः सन्निदर्शनम्॥१४॥

[69] आर्ये, अभिवादये, भरतोऽहमस्मि।

[70] सीता—(आत्मगतम्) नहि रूपमेव। स्वरयोगोऽपि स एव। (प्रकाशम्) वत्स चिरं जीव। [णहि रूवं एव्व। सरजोओ वि सो एव्व। (प्रकाशम्) वच्छ, चिरं जीव।]

[71] भरतः—अनुगृहीतोऽस्मि।

[72] सीता—एहि वत्स, भ्रातृमनोरथं पूरय।
[एहि वच्छ, भादुमणोरहं पुरेहि।]

[73] सुमन्त्रः—प्रविशतु कुमारः।

[74] भरतः—तात, इदानीं किं करिष्यसि?

■ सुमन्त्रः—अहं पश्चात् प्रवेक्ष्यामि स्वर्गं याते नराधिपे।
विदितार्थस्य रामस्य ममैतत् पूर्वदर्शनम्॥

[76] भरतः—एवमस्तु। (राममुपगम्य) आर्य, अभिवादये, भरतोऽहमस्मि।

[77] रामः—(सहर्षम्) एह्येहीक्ष्वाकुकुमार। स्वस्ति, आयुष्मान् भव।

[78] वक्षः प्रसारय कवाटपुटप्रमाणम्
आलिङ्ग मां सुविपुलेन भुजद्वयेन।

उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥१६॥

79 भरतः—अनुगृहीतोऽस्मि ।

80 सुमन्त्रः—(उपेत्य) जयत्वायुष्मान् !

81 रामः—हा तात !

82 गत्वा पूर्वं स्वसैन्यैरभिसरिसमये खं समानैर्विमानैः
विख्यातो यो विमर्दे स स इति बहुशः मासुराणां सुराणाम्
स श्रीमांस्त्यक्तदेहो दयितमपि विना स्नेहवन्तं भवन्तं
स्वर्गस्थः साम्प्रतं किं रमयति पितृभिः स्वैर्नरेन्द्रैर्नरेन्द्रः ॥

83 सुमन्त्रः—(सशोकम्)
नरपतिनिधनं भवत्प्रवासं भरतविषादमनाथतां कुलस्य ।
बहुविधमनुभूय दुष्प्रसह्यं गुण इव बहुपराद्धमायुषा मे ॥

84 सीता—रुदन्तमार्यपुत्रं पुनरपि रोदयति तातः ।
[रोदन्तं अय्यउत्तं पुणो वि रोदावीअदि तादो । ]

85 रामः—मैथिलि, एष पर्यवस्थापयाम्यात्मानम् । वत्स, लक्ष्मण, आपस्तावत् ।

86 लक्ष्मणः—यदाज्ञापयत्यार्यः ।

87 भरतः—आर्य, न खलु न्याय्यम् ! क्रमेण शुश्रूषयिष्ये । अहमेव यास्यामि । (कलशं गृहीत्वा निष्क्रम्य, प्रविश्य) इमा आपः ।

88 रामः—(आचम्य) मैथिलि, विसर्जितो खलु लक्ष्मणस्य व्यापारः ।

89 सीता—आर्यपुत्र, ननु एतेनापि शुश्रूषयितव्यः !
[अय्यउत्त, णं एदिणा वि सुस्सूसइदव्वो !]

[91] **रामः**—सुष्ठु खल्विह लक्ष्मण शुश्रूषयतु। तत्रस्थो भरत शुश्रूषयतु।

[92] **भरतः**—प्रसीदत्वार्य।

[93] इह स्थास्यामि देहेन तत्र स्थास्यामि कर्मणा।
नाम्नैव भवतो राज्यं कृतरक्षं भविष्यति ॥१९॥

[94] **रामः**—वत्स कैकेयीमातः, मा मैवम्।

[95] पितुर्नियोगादहमागतो वनं
न वत्स दर्पान्न भयान्न विभ्रमात्।
कुलं च नः सत्यधनं ब्रवीमि ते
कथं भवान् नीचपथे प्रवर्तते ॥२०॥

[96] **सुमन्त्रः**—अथेदानीमभिषेकोदकं क्व तिष्ठतु?

[97] **रामः**—यत्र मे मातामिहितं तत्रैव तावत् तिष्ठतु।

[98] **भरतः**—प्रसीदत्वार्य। आर्य, अलमिदानीं व्रणे प्रहर्तुम्।

[99] अपि सुगुण ममापि त्वत्प्रसूतिः प्रसूतिः
स खलु निभृतधीमांस्ते पिता मे पिता च।
सुपुरुष पुरुषाणां मातृदोषो न दोषो
वरद भरतमार्तं पश्य तावद्यथावत् ॥२१॥

[99] **सीता**—आर्यपुत्र, अतिकरुणं मन्त्रयते भरतः। किमिदानीमार्यपुत्रेण चिन्त्यते? [अय्यउत्त, अदिकरुणं मन्तेअदि भरदो। किं दाणि अय्यउत्तेण चिन्तीअदि?]

[100] **रामः**—मैथिलि,

[101] तं चिन्तयामि नृपतिं सुरलोकयातं
येनायमात्मजगुणिशिष्टगुणो न दृष्टः।

ईदृग्विधं गुणनिधिं समवाप्य लोकं R C
धिग् भो विधेर्यदि वलं पुरुषोत्तमेषु ॥२३॥

[102] वत्स, कैकेयीमातः !

[103] यस्त्वं परितोषितोऽस्मि भवता निष्कल्मषात्मा भवान्
त्वद्वाक्यस्य वशानुगोऽस्मि भवतः ख्यातैर्गुणैर्निर्जितः ।
किन्त्वेतन्नृपतेर्वचस्तदनृतं कर्तुं न युक्तं त्वया
किञ्चोत्पाद्य भयद्विधं भवतु ते मिथ्याभिधायी पिता ॥

[104] भरतः—यावद्भविष्यति भवन्नियमावसानं
तावद्भवेयमिह ते नृप पादमूले ।

[105] रामः—मैवं नृपः स्वसुकृतैरनुयातु सिद्धिं
मे शापितो न परिरक्षसि चेत् स्वराज्यम् ॥२४॥

[106] भरतः—हन्त, अनुत्तरमभिहितम् ! भवतु; समयतस्ते राज्यं परिपालयामि ।

[107] रामः—वत्स, कः समयः ?

[108] भरतः—मम हस्ते निक्षिप्तं तव राज्यं चतुर्दशवर्षान्ते प्रतिग्रहीतुमिच्छामि ।

[109] रामः—एवमस्तु ।

[110] भरतः—आर्य, श्रुतम् ? आर्ये, श्रुतम् ? तात, श्रुतम् ?

[111] सर्वे—वयमपि श्रोतारः ।

[112] भरतः—आर्य, अन्यमपि वरं हर्तुमिच्छामि ।

[113] रामः—वत्स, किमिच्छसि ? किमहं ददामि ? किमहमनुशास्यामि ?

[114] भरतः—पादोपभुक्ते तव पादुके मे
एते प्रयच्छ प्रणताय मूर्ध्ना ।
यावद्भवानेष्यति कार्यसिद्धिं
तावद्भविष्याम्यनयोर्विधेयः ॥२५॥

[115] रामः—(स्वगतम्) हन्त भोः ।
[116] सुचिरेणापि कालेन यशः किञ्चिन्मयार्जितम् ।
अचिरेणैव कालेन भरतेनाद्य सञ्चितम् ॥२६॥

[117] सीता—आर्यपुत्र, ननु दीयते खलु प्रथमयाचनं भरताय ?
[अय्यउत्त, ण दीअदि खु पुढमजाअणं भरदस्स ?]

[118] रामः—तथास्तु । वत्स, गृह्यताम् । (पादुके अर्पयति)

[119] भरतः—अनुगृहीतोऽस्मि । (गृहीत्वा) आर्य, अत्राभिषेकोदकमावर्जयितुमिच्छामि ।

[120] रामः—तात, यदिष्टं भरतस्य तत् सर्वं क्रियताम् ।

[121] सुमन्त्रः—यदाज्ञापयत्यायुष्मान् ।

[122] भरतः—(आत्मगतम्) हन्त भोः !

[123] श्रद्धेयः स्वजनस्य पौररुचितो लोकस्य दृष्टिक्षमः
स्वर्गस्थस्य नराधिपस्य दयितः शीलान्वितोऽहं सुतः ।
भ्रातॄणां गुणशालिनां बहुमतः कीर्तेर्महद्भाजनं
संवादेषु कथाश्रयो गुणवतां लब्धप्रियाणां प्रियः ॥२७॥

[124] रामः—वत्स, कैकेयीमातः, राज्यं नाम मुहूर्तमपि नोपेक्षणीयम् । तस्मादद्यैव विजयाय प्रतिनिवर्त्यतां कुमार ।

[125] सीता—हम् ! अद्यैव गमिष्यति कुमारो भरतः !

[इं ! अज्ज एव्व गमिस्सदि कुमारो भरदो ? ]

[126] रामः—अलमतिस्नेहेन। अद्यैव विजयाय प्रतिनिवर्ततां कुमारः।

[127] भरतः—आर्य, अद्यैवाहं गमिष्यामि।

[128] आशावन्तः पुरे पौराः स्थास्यन्ति त्वद्दिदृक्षया।
तेषां प्रीतिं करिष्यामि त्वत्प्रसादस्य दर्शनात् ॥२८॥

[129] सुमन्त्रः—आयुष्मन्, मयेदानीं किं कर्तव्यम्?

[130] रामः—तात, महाराजवत् परिपाल्यतां कुमारः।

[131] सुमन्त्रः—यदि जीवामि, तावत् प्रयतिष्ये।

[132] रामः—वत्स कैकेयीमातः; आरुह्यतां ममाग्रतो रथः।

[133] भरतः—यदाज्ञापयत्यार्यः। (रथमारोहतः)

[134] रामः—मैथिलि, इतस्तावत्। वत्स लक्ष्मण, इतस्तावत्। आश्रमपदद्वारमात्रमपि भरतस्यानुयात्रं भविष्यामः।

(निष्क्रान्ताः सर्वे)

## इति चतुर्थोऽङ्कः

## ॥ अथ पञ्चमोऽङ्कः ॥

(ततः प्रविशति सीता तापसी च)

[1] सीता—आर्ये, उपहारसुमन आकीर्णः संमार्जित आश्रमः। आश्रमपदविभवेनानुष्ठितो देवसमुदाचारः। तद्यावदार्यपुत्रो नागच्छति तावदिमान् बालवृक्षानुदकप्रदानेनानुक्रोशयिष्यामि। [अय्ये, उवहार-सुमणाइण्णो सम्मज्जिदो अस्समो। अस्समपदविभवेण अणुट्ठिओ देवसमुदाआरो।

ता जाव अय्यउत्तो ण आअच्छदि दाव इमाणं बालरुक्खाणं उदअप्पदाणेण अणुक्कोसइस्सं ।]

[2] तापसी—अविघ्नमस्य भवतु । [अविग्घ से होदु ।]

[3] (प्रविश्य) रामः—(सशोकम्)

त्यक्त्वा तां गुरुणा मया च रहितां रम्यामयोध्यां पुरीम्
उद्यस्यापि ममाभिषेकमखिलं मत्सन्निधावागतः ।
रक्षार्थं भरतः पुनर्गुणनिधिस्तत्रैव सम्प्रेषितः
कष्टं भो नृपतेर्धुरं सुमहतीमेकः समुत्कर्षति ॥१॥

[4] (विमृश्य) ईदृशमेवैतत् । यावदिदानीमीदृशशोकविनोदनार्थमवस्थाकुटुम्बिनीं मैथिलीं पश्यामि । तत् क नु खलु गता वैदेही । (परिक्रम्य, अवलोक्य) अये, इमानि खलु प्रत्यग्राभिषिक्तानि वृक्षमूलानि अदूरगतां मैथिलीं सूचयन्ति । तथा हि ।

[5] भ्रमति सलिलं वृक्षावर्ते सफेनमवस्थितं
तृषितपतिता नैते क्लिष्टं पिबन्ति जलं खगाः ।
स्थलमभिपतन्त्यार्द्राः कीटा बिले जलपूरिते
नववलयिनो वृक्षा मूले जलक्षयरेखया ॥२॥

[6] (विलोक्य) अये, इयं वैदेही । भो, कष्टम् !

[7] योऽस्याः करः श्राम्यति दर्पणेऽपि
स नैति खेदं कलशं वहन्त्याः ।
कष्टं वनं स्त्रीजनसौकुमार्यं
समं लताभिः कठिनीकरोति ॥३॥

[8] (उपेत्य) मैथिलि, अपि तपो वर्धते !

सीता—हम् आर्यपुत्रः ! जयत्वार्यपुत्रः !
[हं अय्यउत्तो ! जेदु अय्यउत्तो ! ]

रामः—मैथिलि, यदि ते नास्ति धर्मविघ्नः आस्यताम् ।

सीता—यदार्यपुत्र आज्ञापयति ।
[जं अय्यउत्तो आणवेदि । ] (उपविशति)

रामः—मैथिलि, प्रतिवचनार्थिनीमिव त्वां पश्यामि । किमिदम् ?

सीता—शोकशून्यहृदयस्येवार्यपुत्रस्य मुखरागः । किमेतत् ?
[सोअसुण्णहिअअस्स विअ अय्यउत्तस्स मुहराओ । किं एदं ?]

रामः—मैथिलि, स्थाने कृता चिन्ता ।

कृतान्तशल्याभिहते शरीरे तथैव तावद् हृदयव्रणो मे ।
नानाफलाः शोकशराभिघातास्तत्रैव तत्रैव पुनः पतन्ति ॥

सीता—आर्यपुत्रस्य क इव सन्तापः ?
[अय्यउत्तस्स को विअ सन्दावो ? ]

रामः—श्वस्तत्रभवतस्तातस्यानुसंवत्सरश्राद्धविधिः । कल्पविशेषेण निवपनक्रियामिच्छन्ति पितरः । तत् कथं निर्वर्तयिष्यामीत्येतच्चिन्त्यते । अथवा

गच्छन्ति तुष्टिं खलु येन केन
ते एव जानन्ति हि तां दशां मे ।
इच्छामि पूजां च तथापि कर्तुं
तातस्य रामस्य च सानुरूपाम् ॥५॥

सीता—आर्यपुत्र, निर्वर्तयिष्यति श्राद्धं भरत ऋद्ध्या; अवस्थानुरूपं फलोदकेनाप्यार्यपुत्रः । एतत् तातस्य बहुमततरं भविष्यति ।
[अय्यउत्त, णिव्वत्तइस्सदि सद्धं भरदो रिद्धीए; अवत्थाणुरूवं फलोदएण वि अय्यउत्तो । एदं तादस्स बहुमदअरं भविस्सदि । ]

[91] रामः—मैथिलि,

[92] फलानि दृष्ट्वा दर्भेषु स्वहस्तरचितानि नः ।
स्मारितो वनवासं च तातस्तत्रापि रोदिति ॥६॥

[93] (ततः प्रविशति परिव्राजकवेषो रावणः)

[94] रावणः—एष भोः !

नियतमनियतात्मा रूपमेतद् गृहीत्वा
खरवधकृतवैरं राघवं वञ्चयित्वा
स्वरपदपरिहीनां हव्यधारामिवाहं
जनकनृपसुतां तां हर्तुकामः प्रयामि ॥७॥

[95] (परिक्रम्यावलोक्य) इदं रामस्याश्रमपदद्वारम् । यावदवतरामि। (अवतरति) यावदहमप्यतिथिसमुदाचारमनुष्ठास्यामि । अहमतिथि । कोऽत्र भोः ?

[96] रामः—(श्रुत्वा) स्वागतमतिथये ।

[97] रावणः—साधु, विशेषितं खलु रूपं स्वरेण ।

[98] रामः—(विलोक्य) अये भगवान् ! भगवन् , अभिवादये ।

[99] रावणः—स्वस्ति ।

[100] रामः—भगवन्, एतदासनमास्यताम् ।

[101] रावणः—(आत्मगतम्) कथमाज्ञस इवास्म्यनेन ? (प्रकाशम्) बाढम् । (उपविशति)

[102] रामः—मैथिलि, पाद्यमानय भगवते ।

[103] सीता—यदार्यपुत्र आज्ञापयति । (निष्क्रम्य, प्रविश्य) इमा आप. । [ज अय्यउत्तो आणवेदि । (णिष्क्रम्य, पविसिय) इमा आवो । ]

[34] रामः—शुश्रूषय भगवन्तम् ।

[35] सीता—यदार्यपुत्र आज्ञापयति । [जं अय्यउत्तो आणवेदि ।]

[36] रावणः—(मायाप्रभावानुकूलो भूत्वा) भवतु भवतु ।

[37] इयमेका पृथिव्यां हि मानुषीणामरुन्धती ।
यस्या भर्तेति नारीभिः सत्कृतः कथ्यते भवान् ॥८॥

[38] रामः—तेन हि आनय; अहमेव शुश्रूषयिष्ये ।

[39] रावणः—अयि, छायां परिहृत्य शरीरं न लङ्घयामि । वाचानुवृत्तिः खल्वतिथिसत्कारः । पूजितोऽस्मि । आस्यताम् ।

[40] रामः—बाढम् । (उपविशति)

[41] रावणः—(आत्मगतम्) यावदहमपि ब्राह्मणसमुदाचारमनुष्ठास्यामि । (प्रकाशम्) भोः ! काश्यपगोत्रोऽस्मि । साङ्गोपाङ्गं वेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसं श्राद्धकल्पं च ।

[42] रामः—कथं कथं श्राद्धकल्पमिति ?

[43] रावणः—सर्वाः श्रुतीरतिक्रम्य श्राद्धकल्पे स्पृहा दर्शिता । किमेतत् ?

[44] रामः—भगवन्, अष्टाया पितृमत्तायामागम इदानीमेव ।

[45] रावणः—अलं परिहृत्य । पृच्छतु भवान् ।

[46] रामः—भगवन्, निवपनक्रियाकाले केन पितॄंस्तर्पयामि ?

[47] रावणः—सर्वं श्रद्धया दत्तं श्राद्धम् ।

[48] रामः—भगवन्, अनादरतः परित्यक्तं भवति । विशेषार्थं पृच्छामि ।

रावणः—श्रूयताम् । विरूढेषु दर्भा, ओषधीषु तिला, शाकेषु, मत्स्येषु महाशफर, पक्षिषु वार्ध्राणस, पशुषु गौ, खड्गो, इत्येते मानुषाणा विहिता ।

रामः—भगवन्, 'वा'शब्देनावगतमन्यदप्यस्तीति ।

रावणः—अस्ति प्रभावसम्पाद्यम् ।

रामः—भगवन्, एष एव मे निश्चय ।

उभयस्यास्ति सान्निध्यं यदेतत् साधयिष्यति ।
धनुर्वा तपसि श्रान्ते श्रान्ते धनुषि वा तपः ॥९॥

रावणः—सन्ति । हिमवति प्रतिवसन्ति ।

रामः—हिमवतीति ? ततस्तत ?

रावणः—हिमवत सप्तमे शृङ्गे प्रत्यक्षस्थाणुशिर पतितगङ्गाम्बुपायिनो वैडूर्यश्यामपृष्ठा पवनसमजवा काञ्चनपार्श्वा नाम मृगा, यैर्वैखानसवालखिल्यनैमिशीयादयो महर्षयश्चिन्तितमात्रोपस्थितविपन्नै श्राद्धानि अभिवर्धयन्ति ।

तैस्तर्पिताः सुतफल पितरो लभन्ते
हित्वा जरा खमुपयान्ति हि दीप्यमानाः ।
तुल्य सुरैः समुपयान्ति विमानवासम्
आर्तिभिश्च विषयैर्न बलाद् भ्रियन्ते ॥१०॥

रामः—मैथिलि,

आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च
विन्ध्य वन तव सखीर्दयिता लताश्च ।

वत्स्यामि तेषु हिमवद्गिरिकाननेषु
दीप्तैरिवौषधिवनैरुपरञ्जितेषु ॥११॥

[63] सीता—यदार्यपुत्र आज्ञापयति । [जं अय्यउत्तो आणवेदि ।]

[64] रावणः—कौसल्यामातः, अलमतिमनोरथेन । न ते मानुषैः दृश्यन्ते ।

[65] रामः—भगवन्, *किं हिमवति प्रतिवसन्ति ?

[66] रावणः—अथ किम् ।

[64] रामः—तेन हि पश्यतु भवान् ।

[65] सौवर्णान् वा मृगांस्तान् मे हिमवान् दर्शयिष्यति ।
[भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति ॥१२॥]

[66] रावणः—(स्वगतम्) अहो असह्यः मत्त्वस्यावलेपः !

[67] रामः—(दिशो विलोक्य) अये, विद्युत्सम्पात इव दृश्यते !

[68] रावणः—(प्रकाशम्) कौसल्यामातः, इहस्थमेव भवन्तं पूजयति हिमवान् । एष काञ्चनपार्श्वः ।

[69] [रामः—भगवतो वृद्धिरेषा ।]

[70] सीता—दिष्ट्यार्यपुत्रो वर्धते । [दिट्ठिआ अय्यउत्तो वड्ढइ ।]

[71] रामः—न न;
[72] तातस्यैतानि भाग्यानि यदि स्वयमिहागतः ।
अर्हत्येष हि [1]पूजायां लक्ष्मणं ब्रूहि मैथिलि ॥१३॥

[73] सीता—आर्यपुत्र, ननु तीर्थयात्रात् उपावर्तमानं कुलपतिं प्रत्युद्गच्छेति सन्दिष्टः सौमित्रिः ? [अय्यउत्त, ण तित्थजत्तादो उवावत्तमाणं कुलवदिं पच्चुग्गच्छेदित्ति सन्दिट्ठो सोमित्ती ?]

---

* ननु  १ पूजा तत् सौमित्रि

74 रामः—तेन हि अहमेव यास्यामि।

75 सीता—आर्यपुत्र, अहं किं करिष्यामि?
[अय्यउत्त, अहं किं करिस्सं?]

76 रामः—शुश्रूषयस्व भगवन्तम्।

77 सीता—यदार्यपुत्र आज्ञापयति। [जं अय्यउत्तो आणवेदि।]

(निष्क्रान्तो रामः)

78 रावणः—अये, अयमर्घ्यमादायोपसर्पति राघवः। एष इदानीं पूजामनवेक्ष्य धावन्तं मृगं दृष्ट्वा धनुरारोपयति राघवः।

79 अहो बलमहो वीर्यमहो सत्त्वमहो जवः!
राम इत्यक्षरैरल्पैः स्थाने व्याप्तमिदं जगत्॥१४॥

80 एष मृगः एकप्लुतातिक्रान्तशरविषयो वनगहनं प्रविष्टः।

81 सीता—(आत्मगतम्) आर्यपुत्रविरहिताया भयं मेऽत्रोत्पद्यते।
[अय्यउत्तविरहिदाए भअं मे एत्थ उप्पज्जइ।]

82 रावणः—(आत्मगतम्)
माययापहृते रामे सीतामेकां तपोवनात्।
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम्॥१५॥

83 सीता—यावदुटजं प्रविशामि। [जाव उडजं पविसामि।]

(गन्तुमीहते)

84 रावणः—(स्वरूपं गृहीत्वा) सीते, तिष्ठ तिष्ठ!

85 सीता—(सभयम्) हम्! क इदानीमयम्? [हं! को दाणिं अअं?]

86 रावणः—किं न जानीषे?

87 युद्धे येन सुराः सदानवगणाः शक्रादयो निर्जिताः
दृष्ट्वा शूर्पणखाविरूपकरणं श्रुत्वा हतौ भ्रातरौ।

दर्पाद् दुर्मतिमप्रमेयबलिनं रामं विलोभ्य च्छलैः
स त्वां हर्तुमना विशालनयने प्राप्तोऽस्म्यहं रावणः ॥१६॥

सीता—हं रावणो नाम ! [हं ळावणो णाम !] (प्रतिष्ठते)

रावणः—आः ! रावणस्य चक्षुर्विषयमागता क्व यास्यसि ?

सीता—आर्यपुत्र, परित्रायस्व, परित्रायस्व ! सौमित्रे, परित्रायस्व परित्रायस्व ! [अय्यउत्त, परित्ताआहि, परित्ताआहि ! सोमित्ती, परित्ताआहि परित्ताआहि !]

रावणः—सीते, श्रूयतां मत्पराक्रमः ।

भग्नः शक्रः कम्पितो वित्तनाथः
क्रुष्टः सोमो मर्दितः सूर्यपुत्रः ।
धिग् भोः ! स्वर्गं भीतदेवैर्निविष्टं
धन्या भूमिर्वर्तते यत्र सीता ॥१७॥

सीता—आर्यपुत्र, परित्रायस्व, परित्रायस्व ! सौमित्रे, परित्रायस्व परित्रायस्व माम् ! [अय्यउत्त, परित्ताआहि, परित्ताआहि ! सोमित्ती, परित्ताआहि, परित्ताआहि म !]

रावणः—रामं वा शरणमुपेहि लक्ष्मणं वा
स्वर्गस्थं दशरथमेव वा नरेन्द्रम् ।
किं वा स्याद् कुपुरुषसंश्रितैर्वचोभिः
न व्याघ्रं मृगशिशवः प्रधर्षयन्ति ॥१८॥

सीता—आर्यपुत्र, परित्रायस्व, परित्रायस्व ! सौमित्रे, परित्रायस्व परित्रायस्व माम् ! [अय्यउत्त, परित्ताआहि, परित्ताआहि ! सोमित्ती, परित्ताआहि, परित्ताआहि मं !]

[96] रावणः—विलपसि किमिदं विशालनेत्रे
गणय मां च यथा तवार्यपुत्रम् ।
त्रिपुलबलयुतो ममैव योद्धुं
ससुरगणोऽप्यसमर्थ एव रामः ॥१९॥

[97] सीता—(सरोषम्) शप्तोऽसि । [सप्तो सि ।]

[98] रावणः—हहह ! अहो पतिव्रतायास्तेजः ।

[99] योऽहमुत्पतितो वेगान्न दग्धः सूर्यरश्मिभिः ।
अस्याः परिमितैर्दग्धः शप्तोऽस्मीत्येभिरक्षरैः ॥२०॥

[100] सीता—आर्यपुत्र, परित्रायस्व, परित्रायस्व !
[अय्यउत्त, परित्ताअहि, परित्ताअहि !]

[101] रावणः—(सीतां गृहीत्वा) भो भो जनस्थाननिवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः ।

[102] बलादेष दशग्रीवः सीतामादाय गच्छति ।
क्षात्रधर्मे यदि स्निग्धः कुर्याद् रामः पराक्रमम् ॥२१॥

[103] सीता—आर्यपुत्र, परित्रायस्व, परित्रायस्व !
[अय्यउत्त परित्ताअहि परित्ताअहि !]

[104] रावणः—(परिक्रम्य विलोक्य) अये, स्वपक्षपवनोत्क्षेपक्षुभित-वनषण्डश्चण्डचञ्चुरभिधावत्येष जटायुः । आः, तिष्ठेदानीम् ।

[105] मद्भुजाकृष्टनिस्त्रिंशकृत्तपक्षक्षतच्युतैः ।
रुधिरैरार्द्रगात्रं त्वां नयामि यमसादनम् ॥२२॥

(निष्क्रान्तौ)

इति पञ्चमोऽङ्कः

## ॥ अथ षष्ठोऽङ्कः ॥

(ततः प्रविशतो वृद्धतापसौ)

[1] उभौ—परित्रायतां परित्रायतां भवन्तः ।

[2] प्रथमः—इयं हि नीलोत्पलदामवर्चसा

मृणालशुक्लोज्ज्वलदंष्ट्रहासिना ।

निशाचरेन्द्रेण निशार्धचारिणा

मृगीव सीता परिभूय नीयते ॥१॥

[3] द्वितीयः—एषा खलु तत्रभवती वैदेही—

[4] विचेष्टमानेव भुजङ्गमाङ्गना

विधूयमानेव च पुष्पिता लता ।

प्रसह्य पापेन दशाननेन सा

तपोवनात् सिद्धिरिवापनीयते ॥२॥

[5] उभौ—परित्रायतां परित्रायतां भवन्तः ।

[6] प्रथमः—(ऊर्ध्वमवलोक्य) अये, वचनसमकाल एव दशरथस्यानृण्यं कर्तुं मयि स्थिते क्व यास्यसीति रावणमाहूयान्तरिक्षमुत्पतितो जटायुः !

[7] द्वितीयः—एष रोषादुद्वृत्तनयनः प्रतिनिवृत्तो रावणः ।

[8] प्रथमः—एष रावणः ।

[9] द्वितीयः—एष जटायुः ।

[10] उभौ—हन्तैतदन्तरिक्षे प्रवृत्तं युद्धम् !

[11] प्रथमः—काश्यप, काश्यप, पश्य क्रव्यादीश्वरस्य सामर्थ्यम् ।

[12] पक्षाभ्यां परिभूय वीर्यविषयं द्वन्द्वं प्रतिव्यूहते

तुण्डाभ्यां मुनिघृष्टतीक्ष्णमचलः संवेष्टनं चेष्टते ।

तीक्ष्णैरायसकण्टकैरिव नखैर्भीमान्तरं वक्षसो
वज्राग्रैरिव दार्यमाणविषमाच्छैलाच्छिला पात्यते ॥३॥

[13] द्वितीयः—हन्त, सक्रुद्धेन रावणेनासिना क्रव्यादीश्वरः स दक्षिणासदेशे हतः ।

[14] उभौ—हा धिक् ! पतितोऽत्रभवान् जटायुः !

[15] प्रथमः—भो कष्टम् ! एष खलु तत्रभवान् जटायुः ।

[16] कृत्वा स्ववीर्यसदृशं परमं प्रयत्नं
क्रीडामयूरमिव शत्रुमचिन्तयित्वा ।
दीप्तं निशाचरपतेरसिमाप्य तेजो
नागेन्द्रभग्न इव वृक्ष इवावसन्नः ॥४॥

[17] उभौ—स्वर्गोऽस्तु !

[18] प्रथमः—काश्यप, आगम्यताम् । इमं वृत्तान्तं तत्रभवते राघवाय निवेदयिष्याव ।

[19] द्वितीयः—बाढम् ! प्रथमः कल्पः । (निष्क्रान्तौ)

[20] विष्कम्भकः

[21] (ततः प्रविशति काञ्चुकीयः)

[22] काञ्चुकीयः—क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते ?

[23] (प्रविश्य) प्रतिहारी—आर्य, अहं विजया । किं क्रियताम् ?
[अय्य, अहं विजआ । किं करीअदु ?]

[24] काञ्चुकीयः—विजये, निवेद्यतां निवेद्यतां भरतकुमाराय—
'एष खलु रामदर्शनार्थं जनस्थानप्रस्थितः प्रतिनिवृत्तोऽत्रभवान् सुमन्त्र' इति ।

[25] प्रतिहारी—आर्य, अपि कृतार्थस्तातसुमन्त्र आगतः ?
[अय्य, अवि किदत्थो तादसुमन्तो आअदो ?]

[26] काञ्चुकीयः—भवति, न जाने ।

[27] हृदयस्थितशोकाग्निशोषिताननमागतम् ।
दृष्ट्वैवाकुलमासीन्मे सुमन्त्रमधुना मनः ॥५॥

[28] प्रतिहारी—आर्य, एतत् श्रुत्वा पर्याकुलमिव मे हृदयम् ।
[अय्य, एदं सुणिअ पय्याउलं विअ मे हिअअं ।]

[29] काञ्चुकीयः—भवति, किमिदानीं स्थिता ? शीघ्रं निवेद्यताम् ।

[30] प्रतिहारी—आर्य, इयं निवेदयामि । [अय्य, इअं णिवेदेमि ।]
(निष्क्रान्ता)

[31] काञ्चुकीयः—(विलोक्य) अये, अयमत्रभवान् भरतकुमारः
सुमन्त्रागमनजनितकुतूहलहृदयश्चीरवल्कलवसनश्चित्रजटापुञ्जपिञ्जरितोत्त-
माङ्ग इत एवाभिवर्तते । य एषः,

[32] प्रख्यातसद्गुणगणः प्रतिपक्षकालः
तिग्मांशुवंशतिलकस्त्रिदशेन्द्रकल्पः ।
आज्ञावशादखिलभूपरिरक्षणस्थः
श्रीमानुदारकलभेभसमानयानः ॥६॥

[33] (ततः प्रविशति भरतः प्रतिहारी च)

[34] भरतः—विजये, एवमुपगतस्तत्रभवान् सुमन्त्रः ?

[35] गत्वा तु पूर्वमयमार्यनिरीक्षणार्थं
लब्धप्रमादश्रपथे मयि सन्निवृत्ते ।
दृष्ट्वा किमागत इहात्रभवान् सुमन्त्रो
रामं प्रजानयनशुद्धिमनोभिरामम् ॥७॥

[65] भरतः—कथ हृतेति ? (मोहमुपगत)

[66] सुमन्त्रः—समाश्वसिहि, समाश्वसिहि ।

[67] भरतः—(पुन समाश्वस्य) भो कष्टम् !

[68] पित्रा च बान्धवजनेन च विप्रयुक्तो
दुःखं महत् समनुभूय वनप्रदेशे ।
भार्यावियोगमुपलभ्य पुनर्ममार्यो
जीमूतचन्द्र इव खे प्रभया वियुक्तः ॥१२॥

[69] भो किमिदानीं करिष्ये ? भवतु दृष्टम् । अनुगच्छतु मा तात ।

[70] सुमन्त्रः—यदाज्ञापयति कुमार । (उभौ परिक्रामत)

[71] सुमन्त्रः—कुमार, न खलु न खलु गन्तव्यम् । देवीनां चतुश्शालमिदम् ।

[72] भरतः—अत्रैव मे कार्यम् । भो ! क इह प्रतिहारे ?

[73] (प्रविश्य) प्रतिहारी—जयतु भर्तृदारक ! विजया खल्वहम् ।
[जेदु भट्टदारओ ! विजआ खु अहं ।]

[74] भरतः—विजये, ममागमनं निवेदयाम्बभवत्यै ।

[75] प्रतिहारी—कतमस्यै भट्टिन्यै निवेदयामि ?
[कदमाए भट्टिणीए णिवेदेमि ? ]

[76] भरतः—या मा राजानमिच्छति ।

[77] प्रतिहारी—(आत्मगतम्) ह, किं नु खलु भवेत् ? (प्रकाशम्) भर्त , तथा । [ह, किं णु खु भवे ? भट्टा, तह ।] (निष्क्रान्ता)

[8] (तत प्रविशति कैकेयी प्रतिहारी च)

[79] कैकेयी—विजये, मा प्रेक्षितु भरत आगत ?
[विजए, म पेक्खिदु भरदो आअदो ? ]

80 **प्रतिहारी**—भट्टिनि, तथा। भर्तृदारकस्य रामस्य सकाशात् तातसुमन्त्र आगतः। तेन सह भर्तृदारको भरतो भट्टिनीं प्रेक्षितुमिच्छति किल। [भट्टिणि, तह। भट्टिदारअस्स रामस्स सआसादो तादसुमन्तो आअदो। तेण सह भट्टिदारओ भरदो भट्टिणिं पेक्खिदुं इच्छदि किल।]

81 **कैकेयी**—(स्वगतम्) केन खलूद्धातेन मामुपालप्स्यते भरतः? [केण खु उग्घादेण मं उवालम्भिस्सदि भरदो?]

82 **प्रतिहारी**—भट्टिनि, किं प्रविशतु भर्तृदारकः? [भट्टिणि, किं पविसदु भट्टिदारओ?]

83 **कैकेयी**—गच्छ, प्रवेशयैनम्। [गच्छ. पवेसेहि णं।]

84 **प्रतिहारी**—भट्टिनि, तथा। (परिक्रम्योपसृत्य) जयतु भर्तृदारकः! प्रविशतु किल। [भट्टिणि, तह। (परिक्रम्योपसृत्य) जेदु भट्टिदारओ। पविसदु किल।]

85 **भरतः**—विजये, किं निवेदितम्?

86 **प्रतिहारी**—आम्। [आम।]

87 **भरतः**—तेन हि प्रविशावः। (प्रविशतः)

88 **कैकेयी**—जात, विजया मन्त्रयते—'रामस्य सकाशात् सुमन्त्र आगत' इति। [जाद, विजआ मन्तेदि-'रामस्स सआसादो सुमन्तो आअदो'त्ति]

89 **भरतः**—अतः परं प्रियं निवेदयाम्यत्रभवत्यै।

90 **कैकेयी**—जात, अपि कौसल्या सुमित्रा च शब्दापयितव्ये? [जाद, अवि कोसल्ला सुमित्ता अ सद्दावइदव्वा?]

91 **भरतः**—न खलु ताभ्यां श्रोतव्यम्।

92 **कैकेयी**—(आत्मगतम्) हम्! किं नु खलु भवेत्! (प्रकाशम्) भण, जात। [हं! किं णु खु भवे? (प्रकाशम्) भणाहि, जाद।]

93 भरतः—श्रूयताम्—

94 यः स्वराज्यं परित्यज्य त्वन्नियोगाद्वनं गतः ।
तस्य भार्या हृता सीता पर्याप्तस्ते मनोरथः ॥१३॥

95 कैकेयी—हम् !

96 भरतः—हन्त भोः ! सत्वयुक्तानामिक्ष्वाकूणां मनस्विनाम्।
वधूप्रधर्षणं प्राप्तं प्राप्यात्रभवतीं वधूम् ॥१४॥

97 कैकेयी—(आत्मगतम्) भवतु; इदानीं कालः कथयितुम् । (प्रकाशम्) जात, त्वं न जानासि महाराजस्य शापम् । [भवदु, दाणिं काळो कहेदुं । (प्रकाशम्) जाद, तुवं ण आणासि महाराअस्स साव ।]

98 भरतः—किं शप्तो महाराजः ?

99 कैकेयी—सुमन्त्र, आचक्ष्व विस्तरेण । [सुमन्त, आअक्ख वित्थरेण]

100 सुमन्त्रः—यदाज्ञापयति भवती । कुमार, श्रूयताम् । पुरा मृगया गतेन महाराजेन कस्मिंश्चित् सरसि कलशं पूरयमाणो वनगज-बृंहितानुकारिशब्दसमुत्पन्नवनगजशङ्कया शब्दवेधिना शरेण विपन्न-चक्षुषो महर्षेश्चक्षुर्भूतो मुनितनयो हिंसितः ।

101 भरतः—हिंसित इति ? शान्तं पापं, शान्तं पापम् ! ततस्ततः ।

102 सुमन्त्रः—ततस्तमेवं गतं दृष्ट्वा—

103 तेनोक्तं रुदितस्यान्ते मुनिना सत्यभाषिणा ।
'यथाहं मोस्त्वमप्येवं पुत्रशोकाद् विपत्स्यसे' ॥१५॥ इति।

104 भरतः—नन्विदं कष्टं नाम !

105 कैकेयी—जात, एतन्निमित्तमपराधे मा निक्षिप्य पुत्रको रामो वनं प्रेषितः; न खलु राज्यलोभेन । अपरिहरणीयो महर्षिशापः पुत्र-

विप्रवासं विना न भवति। [जाद, एदण्णिमित्तं अवराहे मं णिक्खविअ पुत्तओ रामो वणं पेसिदो; ण हु रज्जलोहेण। अपरिहरणीओ महरिसिणो पुत्तविप्पवासं विणा ण होइ।]

[106] भरतः—अथ तुल्ये पुत्रविप्रवासे कथमहमरण्यं न प्रेपितः ?

[107] कैकेयी—जात, मातुलकुले वर्तमानस्य प्रकृतीभूतस्ते विप्रवासः। [जाद, मादुलकुले वत्तमाणस्स पइदीहूदो दे विप्पवासो।]

[108] भरतः—अथ चतुर्दश वर्षाणि किं कारणमवेक्षितानि ?

[109] कैकेयी—जात, चतुर्दशदिवसा इति वक्तुकामया पर्याकुलहृदयया चतुर्दश वर्षाणीत्युक्तम्। [जाद, चउद्दस दिवस त्ति वत्तुकामाए पय्याउलहिअआए चउद्दस वरिसाणि त्ति उत्तं।]

[110] भरतः—अस्ति पाण्डित्यं सम्यग् विचारयितुम्। अथ विदितमेतद् गुरुजनस्य ?

[111] सुमन्त्रः—कुमार, वसिष्ठवामदेवप्रभृतीनामनुमतं विदितं च

[112] भरतः—हन्त, त्रैलोक्यसाक्षिणः खल्वेते। दिष्ट्याऽनपराद्धा त्रभवती। अम्ब, यद्भ्रातृस्नेहात् समुत्पन्नमन्युना मया दूषितात्रभवती तत् सर्वं मर्षयितव्यम्। अम्ब, अभिवादये।

[113] कैकेयी—जात, का नाम माता पुत्रकस्यापराधं न मर्षयति। उत्तिष्ठोत्तिष्ठ। कोऽत्र दोषः। [जाद, का णाम मादा पुत्तअस्स अवराहं ण मरिसेदि ? उट्ठेहि, उट्ठेहि। को एत्थ दोसो।]

[114] भरतः—अनुगृहीतोऽस्मि। आपृच्छाम्यत्रभवतीम्। अद्यैवाहमार्यस्य साहाय्यार्थं कृत्स्नं राजमण्डलमुद्योजयामि। अयमिदानीं,

[115] वेलामिमां मत्तगजान्धकारां
करोमि सैन्यौघनिवेशनद्धाम्।

बलैस्तरद्भिश्च नयामि तुल्यं
ग्लानिं समुद्रं सह रावणेन ॥१६॥

116 अये, शब्द इव ! तूर्णं ज्ञायतां शब्दः !

117 (प्रविश्य) प्रतिहारी—जयतु कुमारः ! इमं वृत्तान्तं श्रुत्वा ज्येष्ठभट्टिनी मोहं गता ! [जेदु कुमारो ! इमं वुत्तन्तं सुणिअ जेट्ठभट्टिणी मोहं गआ ! ]

118 कैकेयी—हम् !

119 भरतः—कथं मोहमुपगताम्बा !

120 कैकेयी—एहि जात, आर्यामाश्वासयिष्यावः ।
[एहि जाद, अय्यं अस्सासइस्सामो । ]

121 भरतः—यदाज्ञापयत्यम्बा ।

(निष्क्रान्ताः सर्वे)

इति षष्ठोऽङ्कः

॥ अथ सप्तमोऽङ्कः ॥

(ततः प्रविशति तापसः)

1 तापसः—नन्दिलक, नन्दिलक !

2 (प्रविश्य) नन्दिलकः—आर्य, अयमस्मि । [अय्य, अअं म्हि । ]

3 तापसः — नन्दिलक, कुलपतिर्विज्ञापयति — "एष खलु स्वदारापहारिणं त्रैलोक्यविद्रावणं रावणं नाशयित्वा राक्षसगणविरुद्धवृत्तं गुणगणविभूषणं विभीषणमभिषिच्य देवदेवर्षिसिद्धविमलचारित्रां तत्र-भवती सीतामादाय ऋक्षराक्षसवानरमुख्यैः परिवृतः सम्प्राप्तस्तत्रभवान्

शरद्विमलगगनचन्द्राभिरामो रामः। तद्यावदिमाश्रमपदेऽस्मद्विभवेन यत् सङ्कल्पयितव्यं तत् सर्वं सज्जीक्रियताम्" इति ।

नन्दिलकः—आर्य, सर्वं सज्जीकृतम् । किन्तु....
[अय्य, सव्वं सज्जीकिदं । किन्तु ]

तापसः—किमेतत् ?

नन्दिलकः—अत्र विभीषणसम्बन्धिनो राक्षसाः । तेषां भक्षणनिमित्तं कुलपतिः प्रमाणम् । [एत्थ विभीसणकेरआ रक्खसा । तेसं भक्खणणिमित्तं कुलवदी पमाणं ।]

तापसः—किमर्थम् ?

नन्दिलकः—ते खलु खादन्ति । [ते खु खज्जन्ति ।]

तापसः—अलमलं सम्भ्रमेण । विभीषणविधेयाः खलु राक्षसाः ।

नन्दिलकः—नमो राक्षससज्जनाय ।
[णमो रक्खससज्जणाअ ।] (निष्क्रान्तः)

तापसः—(विलोक्य) अये, अयमत्रभवान् राघवः । य एषः,

जय नरवर ! जेयः स्याद् द्वितीयस्तवारि-
स्तव भवतु विधेया भूमिरेकातपत्रा ।
इति मुनिभिरनेकैः स्तूयमानः प्रसन्नैः
क्षितितलमवतीर्णो मानवेन्द्रो विमानात् ॥ १ ॥

जयतु । भवान् जयतु ! (निष्क्रान्तः)

मिश्रविष्कम्भकः

[15] (ततः प्रविशति रामः)

[16] **रामः**—भो !

[17] समुदितबलवीर्यं रावणं नाशयित्वा
जगति गुणसमग्रां प्राप्य सीतां विशुद्धाम् ।
वचनमपि गुरूणामन्ततः पूरयित्वा
मुनिजनवनवासं प्राप्तवानस्मि भूयः ॥२॥

[18] तापसीनामभिवन्दनार्थमभ्यन्तरं प्रविष्टा चिरायते खलु मैथिली। (विलोक्य) अये, इयं वैदेही !

[19] सखीति सीतेति च जानकीति
यथावयः स्निग्धतरं स्नुषेति
तपस्विदारैर्जनकेन्द्रपुत्री
सम्भाष्यमाणा समुपैति मन्दम् ॥३॥

[20] (ततः प्रविशति सीता तापसी च)

[21] **तापसी**—हला, एष ते कुटुम्बिकः । उपसर्पैनम् । न शक्यं त्वामेकाकिनीं प्रेक्षितुम् । [हला, एसो दे कुडुम्बिओ। उवसप्प णं। ण सक्कं तुमं एआइणिं पेक्खिदुं ।]

[22] **सीता**—हम्! अद्याप्यविश्वसनीयमिव मे प्रतिभाति। (उपसृत्य) जयत्वार्यपुत्रः । [हं! अज्ज वि अविस्ससणीअं विअ मे पडिभादि। (उपसृत्य) जेदु अय्यउत्तो।]

[23] **रामः**—मैथिलि, अपि जानासि पूर्वाधिष्ठानमस्माकं जनस्थानमासीत् ? अप्यत्र ज्ञायन्ते पुत्रकृतका वृक्षाः ?

[24] **सीता**—जानामि जानामि, अवलोकितपत्रका उल्लोकयितव्या

R C April 1975

इदानीं संवृत्ताः ।] [जाणामि जाणामि, आलोइअपत्तआ उल्लोअइदव्वा दाणिं संवुत्ता ।]

[35] रामः—एवमेतत् । निम्नस्थलोत्पादको हि कालः । मैथिलि, अप्युपलभ्यतेऽस्य सप्तपर्णस्याधस्ताच्छुक्लवाससं भरतं दृष्ट्वा परित्रस्तं मृगयूथमासीत् ?

[36] सीता—आर्यपुत्र, इदं खलु स्मरामि । [अय्यउत्त, दिदं खु सुमरामि]

[37] रामः—अयं तु नस्तपसः साक्षीभूतो महाकच्छः । अत्रास्मामिरासीनैस्तातस्य निवपनक्रियां चिन्तयद्भिः काञ्चनपार्श्वो नाम मृगो दृष्टः ।

[38] सीता—हम् । आर्यपुत्र, मा खलु मा खल्वेवं भणितुम् ।
[हं, अय्यउत्त, मा खु मा खु एवं भणिदुं ।] (सीता वेपते)

[39] रामः—अलमलं सम्भ्रमेण । अतिक्रान्तः खल्वेष कालः । (दिशो अवलोक्य) अये कुतो नु

[30] रेणुः समुत्पतति लोध्रसमानगौरः
Cover सम्प्रावृणोति च दिशः पवनावधूतः ।
शङ्खध्वनिश्च पटहस्वनधीरनादैः
सम्मूर्छितो वनमिदं नगरीकरोति ॥४॥

[31] (प्रविश्य) लक्ष्मणः—जयत्वार्यः । आर्य,

[32] अयं सैन्येन महता त्वद्दर्शनसमुत्सुकः ।
मातृभिः सह सम्प्राप्तो भरतो भ्रातृवत्सलः ॥५॥

[33] रामः—वत्स लक्ष्मण, किमेवं भरतः प्राप्तः ?

[34] लक्ष्मणः—आर्य, अथ किम् ?

[35] रामः—मैथिलि, श्वश्रूजनपुरोगं भरतमवलोकयितुं विशालीक्रियतां ते चक्षुः ।

[36] सीता—आर्यपुत्र, एष्टव्ये काले भरत आगतः ।
[अय्यउत्त, इच्छिदव्वे काले भरदो आअदो ।]

[37] (ततः प्रविशति भरतः समातृकः)

[38] भरतः—तैस्तैः प्रवृद्धविपयैर्विपमैर्विमुक्तं
मेघैर्विमुक्तममलं शरदीव सोमम् ।
आर्यासहायमहमद्य गुरुं दिदृक्षुः
प्राप्तोऽस्मि तुष्टहृदयः स्वजनानुबद्धः ॥६॥

[39] रामः—अम्बा, अभिवादये ।

[40] सर्वाः—जात, चिरं जीव ! दिष्ट्या वर्धामहे अवसितप्रतिज्ञ त्वा कुशलिनं सह वध्वा प्रेक्ष्य । [जाद, चिर जीव । दिट्ठिआ वड्ढामो अवसिदपडिण्ण तुमं कुसलिणं सह वहूए पेक्खिअ ।]

[41] रामः—अनुगृहीतोऽस्मि ।

[42] लक्ष्मणः—अम्बा, अभिवादये ।

[43] सर्वाः—जात, चिरं जीव । [जाद, चिर जीव ।]

[44] लक्ष्मणः—अनुगृहीतोऽस्मि ।

[45] सीता—आर्याः, वन्दे । [अय्या, वन्दामि ।]

[46] सर्वाः—वत्से, चिरमङ्गला भव । [वच्छे, चिरमङ्गळा होहि ।]

[47] सीता—अनुगृहीताऽस्मि । [अणुग्गहिदह्मि ।]

[48] भरतः—आर्य, अभिवादये भरतोऽहमस्मि ।

[49] रामः—एह्येहि वत्स, इक्ष्वाकुकुमार, स्वस्ति, आयुष्मान् भव !

[50] वक्षः प्रसारय कवाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन ।

उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥७॥

[51] भरतः—अनुगृहीतोऽस्मि। आर्ये, अभिवादये भरतोऽहमस्मि।

[52] सीता—आर्यपुत्रेण चिरमच्चारी भव।
[अय्यउत्तेण चिरसच्चारी होहि।]

[53] भरतः—अनुगृहीतोऽस्मि। आर्य, अभिवादये।

[54] लक्ष्मणः—एह्येहि वत्स, दीर्घायुर्भव। परिष्वजस्व गाढम्।
(आलिङ्गति)

[55] भरतः—अनुगृहीतोऽस्मि। आर्य, प्रतिगृह्यतां राज्यभारः।

[56] रामः—वत्स, कथमिव ?

[57] कैकेयी—जात, चिराभिलषितः खल्वेष मनोरथः।
[जाद, चिराहिलसिदो खु एसो मणोरहो।]

[58] (ततः प्रविशति शत्रुघ्नः)

[59] शत्रुघ्नः—विविधैर्व्यसनैः क्लिष्टमक्लिष्टगुणतेजसम्।
द्रष्टुं मे त्वरते बुद्धी रावणान्तकरं गुरुम् ॥८॥

[60] (उपगम्य) आर्य, शत्रुघ्नोऽहमभिवादये।

[61] रामः—एह्येहि वत्स, स्वस्ति! आयुष्मान् भव!

[62] शत्रुघ्नः—अनुगृहीतोऽस्मि। आर्ये, अभिवादये।

[63] सीता—वत्स, चिरं जीव। [वच्छ, चिरं जीव।]

[64] शत्रुघ्नः—अनुगृहीतोऽस्मि। आर्य, अभिवादये।

[65] लक्ष्मणः—स्वस्ति; आयुष्मान् भव!

[66] शत्रुघ्नः—अनुगृहीतोऽस्मि। आर्य, एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य त्वद्दर्शनमभिलषतः।

[67] तीर्थोदकेन मुनिभिः स्वयमाहृतेन
नानानदीनदगतेन तव प्रसादात्।
इच्छन्ति ते मुनिगणाः प्रथमाभिषिक्तं
द्रष्टुं मुखं सलिलसिक्तमिवारविन्दम् ॥९॥

[68] कैकेयी—गच्छ, जात । अभिलषाभिषेकम् ।
[गच्छ, जाद । अभिलसेहि अभिसेअं । ]

[69] रामः—यदाज्ञापयत्यम्बा । (निष्क्रान्तः)

[70] (नेपथ्ये) जयतु भवान् ! जयतु स्वामी ! जयतु महाराजः ! जयतु देवः ! जयतु भद्रमुखः ! जयत्वार्यः ! जयतु रावणान्तकः !

[71] कैकेयी—एते पुरोहिताः, कञ्चुकिनः पुत्रकस्य मे विजयघोषं वर्धयन्त आशीर्भिः पूजयन्ति ! [एदे पुरोहिदा, कञ्चुइणो पुत्तअस्स मे विजअघोसं वड्ढअन्तो आसीहिं पूजअन्ति ! ]

[72] सुमित्रा—प्रकृतयः परिचारकाः सज्जनाश्च पुत्रकस्य मे विजयं वर्धयन्ति ! [पइदीओ परिचारआ सज्जणा अ पुत्तअस्स मे विजअं वड्ढअन्ति]

[73] (नेपथ्ये) भो भो जनस्थानवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः !

[74] हत्वा रिपुप्रभवमप्रतिमं तमौघं
सूर्योऽन्धकारमिव शौर्यमयैर्मयूखैः ।
सीतामवाप्य सकलाशुभवर्जनीयां
रामो महीं जयति सर्वजनाभिरामः ॥१०॥

[75] कैकेयी—अम्महे, पुत्रस्य मे विजयघोषणा वर्धते !
[अम्महे, पुत्तस्स मे विजअघोसणा वड्ढइ ! ]

[76] (ततः प्रविशति कृताभिषेको रामः सपरिवारः)

[77] **रामः**—(विलोक्याकाशे) भोस्तात !

[78] स्वर्गेऽपि तुष्टिमुपगच्छ विमुञ्च दैन्यं
कर्म त्वयाभिलषितं मयि यत् तदेतत् ।
राजा किलास्मि भुवि मत्कृतभारवाही
धर्मेण लोकपरिरक्षणमभ्युपेतम् ॥११॥

[79] **भरतः**—अधिगतनृपशब्दं धार्यमाणातपत्रं
विकसितकृतमौलिं तीर्थतोयाभिषिक्तम् ।
गुरुमधिगतलीलं वन्द्यमानं जनौघै-
र्नवशशिनमिवार्यं पश्यतो मे न तृप्तिः ॥१२॥

[80] **शत्रुघ्नः**—एतदार्याभिषेकेण कुलं मे नष्टकल्मषम् ।
पुनः प्रकाशतां याति सोमस्येवोदये जगत् ॥१३॥

[81] **रामः**—वत्स लक्ष्मण, अधिगतराज्योऽहमस्मि ।

[82] **लक्ष्मणः**—दिष्ट्या भवान् वर्धते ।

[83] (प्रविश्य) **काञ्चुकीयः**—जयतु महाराजः । एष खलु तत्रभवान् विभीषणो विज्ञापयति—"सुग्रीवनीलमैन्दजाम्बवद्धनूमत्प्रमुखाश्चानुगच्छन्तो विज्ञापयन्ति—'दिष्ट्या भवान् वर्धत' इति" ।

[84] **रामः**—सहायानां प्रसादाद्वर्धे इति कथ्यताम् ।

[85] **काञ्चुकीयः**—यदाज्ञापयति महाराजः ।

[86] **कैकेयी**—धन्या खल्वस्मि । इममभ्युदयमयोध्यायां प्रेक्षितुम् इच्छामि । [धण्णा खु म्हि । इदं अब्भुअअं अओज्झाअ पेक्खिदुं इच्छामि । ]

[87] रामः—द्रक्ष्यति भवती । (विलोक्य) अये, प्रभाभिर्विनमिदमखिलं सूर्यवत् प्रतिभाति । (विभाव्य) आ ज्ञातम् ! सम्प्राप्तं पुष्पकं दिवि रावणस्य विमानम् । कृतसमयमिदं स्मृतमात्रमुपगच्छतीति । तत् सर्वैरारुह्यताम् । (सर्वे आरोहन्ति)

[88] रामः—

अद्यैव यास्यामि पुरीमयोध्यां
सम्बन्धिमित्रैरनुगम्यमानः ।

[89] लक्ष्मणः—

अद्यैव पश्यन्तु च नागरास्त्वां
चन्द्रं सनक्षत्रमिवोदयस्थम् ॥१४॥

( भरतवाक्यम् )

यथा रामश्च जानक्या बन्धुभिश्च समागतः ।
तथा लक्ष्म्या समायुक्तो राजा भूमिं प्रशास्तु नः ॥१५॥

( निष्क्रान्ताः सर्वे )

इति सप्तमोऽङ्कः

॥ प्रतिमानाटकं समाप्तम् ॥



## GRAMMATICAL IRREGULARITIES

**Use of Parasmai for Atmane—**

आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च V [59]
आपृच्छाम्यत्र भवतीम् VI [14]

**Use of Atmane for Parasmai—**

अथ कस्मिन् प्रदेशे विश्रमिष्ये ? II [41]
एतस्मिन् वृक्षान्तराविष्कृते देवकुले मुहूर्तं विश्रमिष्ये III [41]
इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसे ? III [75]

**Simplex for Causative—**

तात, अभिवादनक्रममुपदेष्टुमिच्छामि मातृणाम् III [105]
मम हस्ते निक्षिप्तं तव राज्यं चतुर्दश वर्षान्ते प्रतिग्रहीतुमिच्छामि IV [105]

**Syntactical—**

मा स्वयं मन्युमुत्पाद्य I [108]
अलमुपहतासु स्त्रीबुद्धिषु स्वमाजनमुपनिक्षेप्तुम् I [121]
अलमिदानीं महाराजोऽतिमात्रं सन्ताप्य परवशमात्मानं कर्तुम् II [23]
पश्चाद्धामल कर्तुं गम्यतां भरतेनायम् III [89]
कुमार, अलं गुरुजनापवादमभिधातुम् IV [26]
अलमिदानीं घृणे मर्तुम् IV [27]
आर्यपुत्र, मा खलु मा दान्येव भणितुम् VII [25]

**Anomalous formation—**

ताते धनुर्नमयि I [131]   क्रमेण शुश्रूषयिष्ये II [67]
आर्यपुत्र, नन्वेतेनापि शुश्रूषयितव्य IV [64]
गुरून् गतिरिह त्वमपि शुश्रूषयतु ।  तपस्वी मा भरतः शुश्रूषयतु II [10]
शुश्रूषयस्व भगवन्तम् V [16]

**Use of मे at the beginning of a पाद—**

मे शापितासि न पारयसि चेत् स्वराज्यम् IV [105]

**Of Compound—**

कौसल्यामात V [61]   कैकेयीमात II [83]

## SUBHASHITAS IN THE TEXT

अतः परं न मातुः परिवादं श्रोतुमिच्छामि i [130]
अतः परं प्रियं निवेदयाम्यनभवत्यै vi [89]
अतिक्रान्तः खल्वेष कालः vii [39]
अत्रैव मे कार्यम् vi [78]
अद्याप्यविश्वसनीयमिव मे प्रतिभाति vii [22]
अधन्यस्य मम कार्तवीर्यस्येव बाहुसहस्रं नास्ति iii [5]
अनादरतः परित्यक्तं भवति । विशेषार्थं पृच्छामि v [43]
अनुसरति शशाङ्कं राहुदोषेऽपि तारा i [167]
अनुत्तरमभिहितम् iv [106]
अपण्डितः खलु भवान् i [144]
अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति vi [105]
अपूर्वः खल्वयमायासः i [140]
अलमतिमनोरथेन v [81]
अलमतिस्नेहेन iv [128]
अलमिदानीं भणे प्रहर्तुम् iv [87]
अलमुपहतासु स्त्रीबुद्धिषु स्वमार्जवमुपनिक्षेप्तुम् i [231]
अलीकमिवैतद्भवेत् i [11]
अलं गुरुजनापवादमभिधातुम् iv [96]
अलं परिहृत्य । पृच्छतु भवान् v [45]
अल्पं तुल्यशीलानि द्वन्द्वानि सृज्यन्ते i [12]
अवलोकितपत्रका उल्लोकयितव्या इदानीं संवृत्ताः vii [24]
अवलोकितुमपि नेच्छति कुमारः iv [4]
अविघ्नमस्य भवतु v [2]
अविज्ञातपुरुषविशेषाः खलु वानराः vi [56]
अस्ति पाण्डित्यं सम्यग्विचारयितुम् vi [110]
अस्याः परिमितैर्दग्धः शतोऽसीत्येभिरक्षरैः v [99]
अहो अत्याहितम् i [25] iv [5]

निर्दोषदृश्या हि भवन्ति नार्यो यज्ञे विवाहे व्यसने वने च i [136]

नूनं दशरथं नेतुं कालेन प्रेषितो रथः ii [46]

नोत्सहे श्लाघनीये काले वारयितुम् i [166]

पतति च वनवृक्षे याति भूमिं लता च i [167]

पापं सफलमस्तु iii [65]

पापकं कृतम् i [35]; iv [5]

पारयन्त्यार्यपुत्रोऽलीकमपि सत्यमिव मन्त्रयितुम् i [93]

पित्रा मे दुष्करं कृतम् iv [69]

पिपासार्तोऽनुधावामि क्षीणतोया नदीमिव iii [illegible]

पुनः प्रकाशता याति सोमस्येवोदये जगत् vii [illegible]

पुत्राणां मातृदोषो न दोषः iv [93]

प्रतिवचनार्थिनीमिव त्वा पश्यामि v [13]

फले कस्मिन् स्पृहा तस्या येनाकार्यं करिष्यति i [120]

बहुदोषाण्यरण्यानि ii [67]

बहुवृत्तान्तानि राजकुलानि नाम i [63] i [76]

भर्तृद्रोहादस्तु मातापमाता iii [123]

भर्तृनाथा हि नार्यः i [167]

भवतः ख्यातैर्गुणैर्निर्जितः iv [103]

भवान् खल्वस्मत्पक्षपातादेव नार्थमवेक्षते i [137]

मा खलु मा खल्वार्यपुत्रोऽमङ्गलं भणतु i [101]

मा खलु मा खल्वेवं भणितुम् vii [23]

मा मैवममङ्गल्यवचनानि भाषिष्ठाः ii [54]

मा स्वयं मन्युमुत्पाद्य परिहासे विशेषतः i [104]

मृदुः परिभूयते (स्वजननिभृतः सर्वोऽप्येवं मृदुः परिभूयते) i [139]

यत्कृते महति क्लेशे राज्ये मे न मनोरथः i [153]

यदि जीवामि तावत्प्रयतिष्ये iv [131]

यदि ते नास्ति धर्मविघ्न, आस्यताम् v [10]

यदृच्छया खलु मया महत्कल्माषासादितम् iii [57]

यद्येव, द्वितीयं मे प्रियं श्रुतम् i [57]

प्रिय मे i [90]

स्वप्ने इता चिन्ता v [14]
गजनादिति ? हन्त ! नास्ति प्रतीकार i [114]
स्व पुत्र कुरुते पितुर्यदि वच कस्तत्र भो विस्मय i [11]
स्वर्गऽपि तुष्टिमुपगच्छ विमुञ्च दैन्यम् vii [73]
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम् v [83]
हन्त प्रेतोऽयमाक्षिण खल्वेते ! दिष्ट्यानपराद्धाम्र भवती ! vi [119]
हन्त निवेदितमप्रभुत्वम् i [181]
हन्त ! सर्वमुक्तमेव मया vi [61]
हस्तस्पर्शा हि मातृणामजलस्य जलाञ्जलि iii [93]
हहह ! अहो पतिव्रतायस्तेन ! v [93]

---

## METRICAL ANALYSIS

अनुष्टुप् (श्लोक) — (75) i 4, 6, 9–13, 15–17, 19–21, 23, 24, 26–28, 31, ii 3, 5, 6, 8–12, 15–18, 20, iii 5–7, 9, 11, 13, 15, 17, 20, 21, 24, 25, iv 3–5, 11, 12, 14, 15, 19, 26, 28, v 6, 8, 9, 12–15, 20–22, vi 5, 9–11, 13–15, vii 5, 8, 13, 15

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयो ।
गुरु षष्ठं च पादानां चतुर्णां स्यादनुष्टुभि ॥

वसन्ततिलका—(22) i 7, 8, 22, ii 1, 4, iv 1, 2, 16, 22, 24, v 10, 11, vi 4, 6, 7, 12, vii 4, 6, 7, 9–11

उक्ता वसन्ततिलका तभजा जगौ ग ॥

मालिनी—(10) i 14, 25 iii 10, 22, iv 10, 21, v 7, vii 1, 2, 12

ननमयययुतेयं मालिनी भोगिलोकै ॥

शार्दूलविक्रीडितम्—(9) i 3 5, ii 2, 19, iv 23, 27, v 1, 16, vi 5

सूर्याश्वैर्मसजस्तताःसगुरवः शार्दूलविक्रीडितम् ॥

उपजाति (Combination of इन्द्र & उपेन्द्रवज्राs)—(9) i 1, iii 3, 4, 16, iv 9, 13, v 3, 4, 5, vi 16, vii 3

a) स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥

b) उपेन्द्रवज्रा जतजास्ततो गौ ॥

शिखरिणी—(5) ii 14, iii 1, 2, 23, iv 7

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥

वंशस्थम्—(4) iii 14, iv 20, vi 1, 2

जतौ तु वंशस्थमुदीरितं जरौ ॥

पुष्पिताग्रा—(4) ii 21, iv 18 v 19, vi 8

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥

हरिणी—(4) i 18, iii 18, iv 8 v 2

नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ॥

इन्द्रवज्रा—(3) i 29, iv 25, vii 14

स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥

शालिनी—(3) ii 13, iii 19, v 17

मात्तौ गौ चेच्छालिनी वेदलोकैः ॥

प्रहर्षिणी—(3) i 30, iv 6, v 18

त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ॥

सुवदना—(2) iii 8, 12

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥

आर्या—(2) i 2, ii 7

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।

अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥

स्रग्धरा—(1) iv 17

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥

**Stanzas attributed to Bhasa in the Anthologies**

## 1 शार्ङ्गधरपद्धतौ—

१ अस्या ललाटे रचिता सखीभिर्विभाव्यते चन्दनपत्रलेखा ।
आपाण्डुरक्षामकपोलभित्तावनङ्गबाणव्रणपट्टिकेव ॥

२ कपोले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी सकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥

३ तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः, शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः
तोयं प्रसीदति मुनेरिव चित्तमन्तः, कामी दरिद्र इव शोषमुपैति पङ्कः ॥

४ दयिताबाहुपाशस्य कुतोऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥

५ पेया सुरा प्रियतमामुखमीक्षणीयं, ग्राह्यः स्वभावललितो विकटश्च वेषः ।
येनेदमीदृशमदृश्यत मोक्षवर्त्म, दीर्घायुरस्तु भगवान् स पिनाकपाणिः ॥

## II सदुक्तिकर्णामृते—

१ दग्धे मनोभवतरौ बालाकुचकुम्भसम्भृतैरमृतैः ।
त्रिवलीकृतालवाला जाता रोमावली वल्ली ॥

२ प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया
दृष्ट्वाग्रे परिणेतुरेव लिखिता गङ्गाधरस्याकृतिम् ।
उन्मादस्मितरोमलाञ्छितरसैर्गौर्या कथंचिच्चिराद्
बद्धः स्त्रीरचनाप्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥

३ विरहिवनितावक्त्रौपम्यं बिभर्ति निशापति
र्गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः ।
अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ॥

### 3 सुभाषितावल्याम्—

१ कठिणहृदये मुञ्च क्रोधं सुखप्रतिघातकं
लिखति दिवसं यातं यातं यम किल मानिनि ।
वयसि तरुणे नैतद्युक्तं चले च समागमे
भवति कलहो यावत्तावद्वर सुभगे रतम् ॥

२ कृतककृतकैर्मायासक्त्यैस्त्वयास्म्यतिवञ्चिता
निभृतनिभृतैः कार्यालापैर्मयाप्युपलक्षितम् ।
भवतु विदितं नेष्टाहं ते वृथा किमु खिद्यसे
ह्यहमसहना त्वं निःस्नेहः समेन सम गतम् ॥

३ दुःखार्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टा तथा
दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते ।
कालं वेत्ति कथाः करोति निपुणा मत्संस्तवे रज्यति
भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता ॥

४ बाला च सा विदितपञ्चशरप्रपञ्चा, तन्वी च सा स्तनभरोपचिताङ्गयष्टिः ।
लज्जा समुद्वहति सा सुरतावसाने, हा कापि सा किमिव किं कथयामि तस्याः

### 4 सूक्तिमुक्तावल्याम्—

१ यदपि विबुधैः सिन्धोरन्तः कथञ्चिदुपार्जितं
तदपि सकलं चारुस्त्रीणां मुखेषु विलोक्यते ।
सुरसुमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने ॥

### 5 अभिनवभारत्याम् (अभिनवगुप्तविरचितायाम्)

१ त्रेतायुगं तदिदं न मैथिली सा, रामस्य रागपदवी मृदु चास्य चेतः ।
लब्धा जनस्तु यदि रावणमस्य कायं प्रोत्कृत्य तन्न तिलशो न वितृप्तिगामी ॥

### 6 नाट्यदर्पणे (रामचन्द्रगुणचन्द्रविरचिते)

१ पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलातलम् ।
नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता ॥

---

॥ श्रीः ॥

# PRATIMĀ-NĀṬAKA

( THE STATUES )

[1] *(At the end of the Nāndī, then enters the Stage-Manager)*

[2] STAGE-MANAGER — May the protector (of the world), Rāma, charming with a beautiful neck, protect us in every (successive) life;—Rāma, who was Sītā's husband, who was pleased with *Sumantra* (1. good counsel; 2. SUMANTRA, the charioteer and minister of his father), who had Lakṣmaṇa as his companion, who on account of his queen was matchless among the foes of Rāvaṇa, and to whom Vibhīṣaṇa was like his own self. [1]

[3] *(Looking towards the curtain)*

Lady, please come here

[4] *(Entering)* ACTRESS—Here I am, sir.

[5] STAGE-MANAGER — Lady, just sing us a song now about this very autumnal season.

[6] ACTRESS—Well, sir. *(Sings)*

[7] STAGE-MANAGER —In this season, indeed,

[8] There moves about on sandy beds the female swan with very great joy, wearing as it were a silk garment as white as Kāśa flowers, (or living on the Kāśa-covered bank [of a river] ),....

[9] *(Behind the curtain)* Sir, sir!

[10] *(Listening)* STAGE-MANAGER—Well, it is known.

[11] Like the jovial portress, bustling in the king's palace [2]

*(Exeunt ambo)*

[12] PROLOGUE

[13] *(Entering)* PORTRESS—Sir, which of the Chamberlains is nearby?

[14] *(Entering)* CHAMBERLAIN—Lady, here I am, what shall I do?

[15] PORTRESS—Sir, the great king Dasaratha, whose great chariot is (or who is a *Mahāratha)* never repulsed in the wars between the gods and demons, orders—"Let the materials (required) for the consecration of prince Rama that would invest him with regal powers be gathered soon."

[16] CHAMBERLAIN—Lady, every thing that was ordered by the great king, has been kept ready. Look—

[17] The (royal) umbrella together with the *(cāmara)* fans, as also the auspicious seat (throne) have been kept ready, with the drums announcing the occasion. Gold pots filled with sacred water and containing *darbha* and flowers are placed. The chariot of success has also been yoked. The citizens together with the ministers have arrived. And that Revered Vasiṣṭha, the auspicious cause of all these, is on the dais. [3]

[18] PORTRESS—If so, well done.

[19] CHAMBERLAIN—Ah, joy! O lady!

[20] Now the subjects are made fortunate by the king who is (going to) consecrate on the earth the moon called Rama. [4]

[21] PORTRESS—Please hasten, noble sir, hasten.

[22] CHAMBERLAIN—Lady, here I hurry up. *(Exit)*

[23] PORTRESS—*(Moving round and beholding)* Sambhavaka! O noble Sambhavaka please go, you too hasten with the formalities of courtesy the Revered Priest on the words of the king. *(Going elsewhere)* Sarasikā, O Sarasikā! having gone into the concert hall inform the actors to be ready with a play that would suit the occasion. In the meanwhile, I will report to the great king that every thing has been done. *(Exit)*

24 *(Then enter Avadātikā holding a birch garment)*

25 AVADĀTIKĀ—Ah! What a great misfortune! There was so much fear in me while bringing away this birch dress just for fun; how much more would it be in one who steals another's wealth greedily. I wish to laugh, as it were. But, indeed, one should not laugh in solitude.

26 *(Then enter Sītā with retinue)*

27 SĪTĀ—Maid, Avadatika looks like one with an expression of fear. What could this mean?

28 MAID—Princess, a servant is indeed easily liable to commit mistakes. She must be guilty (of some thing).

29 SĪTĀ—No, no, she wishes to smile as it were.

30 AVADĀTIKĀ—*(Going near)* Hail Princess! Princess, I am not at all guilty.

31 SĪTĀ—Who asks you that? Avadatika, what is this held in your left hand?

32 AVADĀTIKĀ—Princess, this is a brich-garment.

33 SĪTĀ—From whom was the birch garment brought?

34 AVADĀTIKĀ—Please listen, princess. The Revered Reva, guarding the green-room, was requested by us for a sprout of the As'oka tree whose stage purpose was over. But it was not given by her. Hence, thinking that her fault deserved (such re action), this garment was brought away.

35 SĪTĀ—A sin has been committed. Go; return it.

36 AVADĀTIKĀ—Princess, this was indeed brought by me for fun.

37 SĪTĀ—Mad girl! thus the fault grows. Go, return it; give it back.

38 AVADĀTIKĀ—As the princess commands. *(Desires to depart)*

39 SĪTĀ—Friend, just come here.

40 AVADĀTIKĀ—Princess, here I am.

41 SĪTĀ—Friend, does it appear well on me too?

42 AVADĀTIKĀ—Princess, a lovely figure indeed looks quite graceful with anything on. Please wear it, princess.

[43] SĪTA–Just bring it here *(Receiving and wearing)* Friend see, does it suit me now?

[44] AVADĀTIKĀ —'Suit you?' The bark garment has become golden, as it were!

[45] SĪTA—Maid, (how is it) you do not say anything?

[46] MAID—No use of words These thrilled hairs, speak for themselves *(Shows the horripilation)*

[47] SĪTĀ—Maid, just bring a mirror.

[48] MAID–As the princess bids *(Exit and re enter)* Princess, here is the mirror

[49] SĪTA—*(Looking at the maid's face)* Let aside the mirror You seem to be desirous of saying something

[50] MAID—Princess, thus I heard The Revered Chamberlain Bālakī says—'Consecration, consecration'.

[51] SĪTA—Some one will be (enthroned) king in his realm

[52] *(Enter another maid)*

[53] MAID—Princess, good news, good news

[54] SĪTĀ—With what thing in your mind, do you speak?

[55] MAID—They say that the prince (Rāma) is going to be consecrated (as king)

[56] SĪTĀ—Is father (in law) well?

[57] MAID—By the great king himself, (the prince) is going to be consecrated

[58] SĪTĀ—If so, a second pleasant (news) has been heard Widen your lap well

[59] MAID—Yes, princess *(Does so Sītā having removed her ornaments, presents them to her)*

[60] MAID—Princess, the drum sound, as it were!

[61] SĪTĀ—The very same!

[62] MAID—The drum sound, after being produced (*lit* struck), has ceased all at once!

[63] SĪTĀ—What possibly could be the obstacle in the way of the installation? Or, royal houses are generally full of various events

[64] MAID Princess, thus I heard 'The great king, having installed the prince (on the throne), will go to the forest'

[65] SĪTĀ—If so, it is not consecration water, but is indeed the water to wash the face

[66] *(Then enter Rāma)*

[67] RĀMA—Alas! oh!

[68] When the drum had begun (to sound), elders had stood around, the auspicious seat (throne) was ascended (by me), and the pot was with water about to pour out as its mouth was being bent after it was raised up to the shoulder, then, as I was called out and dismissed by the king, people were astonished at my steadiness But, oh! what astonishment is there if a son carries out the words of his own father? [5]

[69] As I was dismissed by the king himself who said—'Now my son you may take rest', my mind breathed out as it were, a sigh of relief, the burden (of kingship) being removed Fortunately, I am the same Rama, and the great king the same great king! Now, I will just see Maithili

[70] AVADĀTIKA—Princess, the prince is coming, forsooth The birch-dress is not (yet) removed!

[71] RĀMA—Maithili, how is it you are remaining seated?

[72] SĪTĀ—Hum! It is my husband! *(Rising up from her seat)* Hail! my lord

[73] RĀMA—Maithili, please sit down *(Sits)*

[74] SĪTĀ—As my lord bids *(Sits)*

[75] AVADĀTIKĀ—*(Aside)* Princess, the dress of the prince is the same (as usual) It seems, the (news) must be false

[76] SĪTĀ—Such a person would not speak falsehood Or, royal houses are generally full of various events

[77] RĀMA—Maithili, what is it being talked about?

[78] SĪTA—Nothing at all This girl says—"Installation, installation"

[79] RĀMA—I understand your curiosity There was 'installation' Listen To day, in the presence of the priests,

ministers and citizens, by the great king seating me on his lap with which I was familiar in my childhood affectionately addressing me by my mother's family name and in a way bringing together the (whole of) the Kosala kingdom I was told—'My son, Rama please accept the kingdom '

[80] SITA—To that, what did my lord say?

[81] RAMA—Maithili what is your guess?

[82] SITĀ—I guess that my lord, not saying anything, (but simply) heaving a long sigh fell at the feet of the great king

[83] RĀMA—Well guessed! Couples of the same disposition are rarely created Then in fact, I fell at the (king's) feet

[84] By the tears falling down simultaneously,—his from above (on my head) and mine below (on his feet),—the two feet of my father were drenched, and my head was rendered wet [6]

[85] SITĀ—Then then?

[86] RAMA—Then, when his solicitations were not accepted by me, I was conjured by his life already affected by the infirmities of oldage

[87] SITĀ—Then, then?

[88] RĀMA—Then at that moment,

[89] When the jar containing consecration water was held up by Śatrughna and Lakṣmaṇa, and when the royal umbrella was taken up by the king himself shedding tears (of joy), some thing was gently whispered in the ear of the king by the flurried Manthara, and I am not the king [7]

[90] SITA—I like that The great king is the same great king, and my lord is just my lord

[91] RAMA—Maithili, why are you with your ornaments taken off?

[92] SITĀ—I am not wearing them as yet

[93] RĀMA—That cannot be The ornaments must have been removed just recently For,—

[94] Both of your ears are with their lobes curved on

account of the ornaments being removed in haste; your two hands are with palms turned reddish white by the removal of ornaments; and these several parts in your body compressed by the weight of the ornaments, are not yet gaining evenness. [8]

95 SĪTĀ-My lord is capable of presenting even an untrue thing as true.

96 RĀMA—Then just adorn yourself. I will hold the mirror. *(Doing so, observing)* Stay;—

97 In the mirror (I see) a bark-dress as it were. Are these the rays of the sun? By your smile it is known; this is (mere) fun, or a desire to observe some vow. [9]

98 Avadātikā, what is this?

99 AVADĀTIKĀ—Prince, these (garments) were put on to see whether they suit her or not.

100 RĀMA—Maithili, what is this? The dress of oldage among the Ikṣvākus is worn by you (now)! I too like that. Bring me one

101 SĪTĀ-No, no. Let not my lord utter inauspicious words.

102 RĀMA—Maithili, why do you prevent (me)?

103 SĪTĀ—It appears to me inauspicious in the case of my lord whose installation has just been stopped.

104 RĀMA—Do not yourself conceive an evil thought, especially in a matter of joke, when by you, half my body, those (garments) have already been put on. [10]

105 *(Behind the curtain)* Alas! alas! the great king!

106 SĪTĀ—My lord, what is this?

107 RĀMA—*(Listening)* As there is a limit-less clamour of both men and women, it is quite evident that Fate has hit at the very root, thinking that *she* is all-powerful. [11]

108 Soon, please ascertain (what) the clamour (is about).

109 *(Entering)* CHAMBERLAIN—May the prince protect, may the prince protect!

110 RĀMA—Sir, who is to be protected?

